व्या ॥ तस्येति । अंसधारासदने—अंसः स्कन्धः; 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः; स एव धारासदनं स्नानगृहं तस्मिन् । अवतंसमाल्यासवस्यन्दनितान्तशीते—अवतंसभूतस्य माल्यस्य य आसवः मधु ; 'मध्वासवोऽसितस्सेव्यः' इति वैजयन्ती; तस्य स्यन्देन प्रस्रवेण, नितान्तशीते अतिशीतले। प्रतापज्वरविह्वला—प्रतापतापेन विह्वला क्षीणा । विमुक्तलौल्या—विमुक्तं त्यक्तं लौल्यं चाञ्चल्यं यया सा, स्थिरेत्यर्थः ; 'लोलश्चलसतृष्णयोः' इत्यमरः ॥ ४३ ॥

तस्याभिषेके सचिवावमुक्तै-
गङ्गादितीर्थोपनतैः पयोभिः ।
शत्रुप्रतापानलशक्तिरासि[1]
सहैव पुंसां हृदयज्वरेण ॥ ४४ ॥

व्या ॥ तस्येति । सचिवावमुक्तैः सचिवैः मन्त्रिभिः अवमुक्तैः विसृष्टैः । गङ्गादितीर्थोपनतैः—गङ्गा आदिर्येषान्तानि तेभ्यस्तीर्थेभ्यः उपनतैः आहृतैः । आसि निरस्ता ; 'असु क्षेपणे' इत्यस्माद्धातोः कर्मणि लुङ् । अत्र सहोक्तिरलङ्कारः । पुंसां हृदयज्वरः राजाभिषेकाभावप्रयुक्तस्तदुन्मुखः सन्तापः इत्यवगन्तव्यम् ॥ ४४ ॥

सुवर्णरूपं सुमनोनिषेव्यं
तुङ्गं सुधर्मास्पदमद्वितीयम् ।
तं भूभृतं मेरुमिव प्रपन्नाः
श्चकाशिरे [2]षड्गुणरत्नसार्थाः ॥ ४५ ॥

व्या ॥ सुवर्णेति । सुवर्णरूपम्—वर्णश्च रूपश्च वर्णरूपे, शोभने वर्णरूपे जात्याकृती यस्य तम् ; अन्यत्र स्वर्णमयम् । सुमनोनिषेव्यम्—

---

[1] शान्तिरासीत् V. M.  [2] सद्गुण. M.

सुमनोभिः विद्वद्भिः देवैश्च, निषेव्यं सेव्यम् । तुङ्गम् उन्नतम्; एकत्र गुणेनान्यत्राकृत्या चेति भावः । सुधर्मास्पदम्—शोभनानां धर्माणामहिंसादीनाम्, सुधर्माया देवसभायाश्च; 'स्यात्सुधर्मा देवसभा' इत्यमरः; आस्पदं स्थानम् । षड्गुणरत्नसार्थाः—षड्गुणाः सन्धिविग्रहयानासनद्वैधीभावसमाश्रया एव रत्नानि, तेषां सार्थाः समूहाः ॥ ४५ ॥

अन्यत्र [1]कर्णः सुधियामसक्त-
स्तस्यापदानश्रवणे ससज्ज ।
अपास्य पीयूषरसं सुराणां
रसान्तरे किं रमते रसज्ञा ॥ ४६ ॥

व्या ॥ अन्यत्रेति । अन्यत्र विषयान्तरश्रवणे । असक्तः निःस्पृहः । अपदानश्रवणे चरितस्य श्रवणे । ससज्ज आसक्तोऽभूत् । रसान्तरे अन्यः रसः रसान्तरं तस्मिन् । रमते; स्वदत इत्यर्थः । रसज्ञा जिह्वा; 'रसज्ञा रसना जिह्वा' इत्यमरः ॥ ४६ ॥

सहस्रशस्सन्त्वपरेऽपि भूपा-
स्तेनैव सौराज्यवती धरित्री ।
अनेकरत्नप्रभवोऽप्युदन्वान्
रत्नाकरोऽभून्ननु कौस्तुभेन ॥ ४७ ॥

व्या ॥ सहस्रश इति । सौराज्यवती शोभनराजकर्मवती; शोभनो राजा सुराजा; सुराज्ञो भावः कर्म वा सौराज्यं प्रजापरिपालनरूपमस्यामस्तीति । अनेकरत्नप्रभवः अनेकेषां रत्नानां प्रभवः उत्पत्तिस्थानम् । उदन्वान् समुद्रः; उदकमस्यास्तीति विग्रहे 'उदन्वानुदधौ च' इति निपातनात् साधुः । ननु इति प्रसिद्धौ ॥ ४७ ॥

---

[1] कामः. M.

महात्मना तेन मखैरजस्र-
माहूयमानेष्वमृताशनेषु ।
परिष्क्रियाजायत पारिजातः
परं सुराधीश्वरराजधान्याः ॥ ४८ ॥

व्या ॥ महात्मनेति । महात्मना महान् आत्मा स्वभावः यस्य तेन । मखैः यज्ञैः; 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः । अमृताशनेषु अमृतम् अशनं येषां तेषु देवेषु । परिष्क्रिया अलङ्कारः । परमिति केवलार्थे अव्ययम् । सुराधीश्वरराजधान्याः सुराणामधीश्वरस्य इन्द्रस्य राजधान्याः प्रधाननगर्या अमरावत्याः । अस्य राज्ञो यज्ञैः पुष्टानां देवानामीहितफलप्रदत्वेन पारिजातस्य न किमपि प्रयोजनमिति भावः ॥ ४८ ॥

तस्यापदानानि तटस्थिताभिः[1]
सङ्गीयमानानि सुराङ्गनाभिः ।
आकर्ण्य हर्षाद्द्रवतीव मेरु-
रद्यापि निष्यन्दजलापदेशात ॥ ४९ ॥

व्या ॥ तस्येति । अपदानानि चरितानि । निष्यन्दजलापदेशात्—निष्यन्दस्य प्रस्रवणस्य जलस्य अपदेशात् व्याजात्; 'व्याजोऽपदेशो लक्ष्यश्च' इत्यमरः ॥ ४९ ॥

तस्मिन् नृपे तन्वति दानवर्षं
नैकोऽप्यसम्पूर्णमनोरथोऽभूत् ।
महाघने वर्षति बद्धधार-
मलब्धपूर्त्यस्ति सरः किमुर्व्याम् ॥ ५० ॥

व्या ॥ तस्मिन्निति । असम्पूर्णमनोरथः—असम्पूर्णः मनोरथः यस्य सः । बद्धधारम् बद्धा निष्पादिता धारा जलसन्ततिर्यस्मिन् कर्मणि

---

[1] स्थितानि. C. T.

तत्; क्रियाविशेषणम्। अलब्धपूर्ति अलब्धा पूर्तिः पूरणं येन तत् उर्व्यामित्यस्य वर्षतीत्यनेनान्वयः ॥ ५० ॥

नदीव सिन्धोर्नलिनीव भानोः
कलेव चन्द्रोः कमलेव विष्णोः ।
सौदामिनीवाम्बुधरस्य तस्य
मायेति नाम्ना महिषी बभूव ॥ ५१ ॥

व्या ॥ नदीति । सौदामिनी विद्युत्; 'तटित्सौदामिनी विद्युत्' इत्यमरः । महिषी कृताभिषेका पत्नी; 'कृताभिषेका महिषी' इत्यमरः ॥ ५१ ॥

अथ महिषीं मायादेवीं पञ्चविंशत्या पद्यैर्वर्णयति—

तस्याः प्रवालोदरसोदराभं[1]
युग्मं पदाम्भोरुहयोर्बभार ।
सामन्तकान्तालकवल्लरीणां
पुष्पायमाणान्नखपूर्णचन्द्रान् ॥ ५२ ॥

व्या ॥ तस्या इति । प्रवालोदरसोदराभम्—प्रवालस्य अभिनवपल्लवस्य; 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे' इति हेमचन्द्रः; यत् उदरम् अन्तर्भागः तस्य सोदरा तुल्या आभा कान्तिः यस्य तत् । पदाम्भोरुहयोः—पदे अम्भोरुहे इवेत्युपमितसमासः । सामन्तकान्तालकवल्लरीणाम्—सामन्तकान्तानाम् उपराजवधूनाम् अलकाश्चूर्णकुन्तला एव वल्लर्यः लतास्तासाम्; 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । पुष्पायमाणान् पुष्पाणीवाचरतः । नखपूर्णचन्द्रान्—नखान् पूर्णचन्द्रानिवेत्युपमितसमासः ॥ ५२ ॥

---

[1] सोदरोत्थं. M.

विजृम्भमाणा नखरत्नदीप्तिः
पदस्य तस्याः पतिदेवतायाः ।
चकार शङ्कां शरणागतायाः
स्वर्भानुभीत्या शशिचन्द्रिकायाः ॥ ५३ ॥

व्या ॥ विजृम्भमाणेति । पतिदेवतायाः पतिः देवता यस्यास्तस्याः पतिव्रतायाः । शरणागतायाः शरणं रक्षित्रीमागतायाः; 'शरणं गृहरक्षित्रोः' इत्यमरः । स्वर्भानुभीत्या—स्वर्भानोः राहोः भीत्या भयेन; 'तमस्तु राहुः स्वर्भानुः' इत्यमरः ॥ ५३ ॥

आकारमत्यद्भुतसन्निवेशं
दधानयोर्दर्शितसौकुमार्यम् ।
तज्जङ्घयोस्तादृशकान्तिमत्यो-
र्न चाधिकं नापि समं बभूव ॥ ५४ ॥

व्या ॥ आकारमिति । आकारम् रूपम् । अत्यद्भुतसन्निवेशम्—अत्यद्भुतः सन्निवेशः विन्यासः यस्य तम् । दर्शितसौकुमार्यम्—दर्शितं सौकुमार्यं मार्दवं येन तम् । तज्जङ्घयोः तस्याः जङ्घाप्रदेशयोः; 'प्रसृता जाघनी जङ्घा' इति वैजयन्ती । तादृशकान्तिमत्योः प्रसिद्धशोभावत्योः ॥ ५४ ॥

ये दर्शनीया द्विपराजहस्ता
ये चाभिजाताः कदलीविशेषाः ।
तदूरुकाण्डद्वयजृम्भमाण-
सौन्दर्यरत्नाकरबिन्दवस्ते ॥ ५५ ॥

व्या ॥ य इति । द्विपराजहस्ताः द्विपराजानां गजश्रेष्ठानां हस्ताः शुण्डादण्डाः । अभिजाताः जात्या उत्कृष्टाः । तदूरुकाण्डद्वयजृम्भमाण-

सौन्दर्यरत्नाकरबिन्दवः—ऊरू सक्थिनी काण्डाविव दण्डाविव ऊरुकाण्डौ; 'सक्थि क्लीबे पुमानूरुः', 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्युभयत्रामरः; तस्या ऊरुकाण्डयोः द्वयात् जृम्भमाणं वर्धमानं यत्सौन्दर्यं तदेव रत्नाकरः समुद्रः, तस्य बिन्दवः कणाः तस्या ऊरुद्वयस्य यत्सौन्दर्यं तल्लेशोऽपि करिहस्तस्य कदलीविशेषस्य च नास्तीति भावः ॥ ९५ ॥

माणिक्यकाञ्चीवलयानुविद्ध-
श्रोणीभरा क्ष्मापतिधर्मपत्नी ।
वसुन्धरेवार्णवरत्नगर्भ-
वेलासमालिङ्गितसैकतान्ता ॥ ९६ ॥

व्या ॥ माणिक्येत्यादि । माणिक्यकाञ्चीवलयानुविद्धश्रोणीभरा—माणिक्यस्य काञ्च्याः मेखलायाः; 'स्त्रीकट्यां मेखला काञ्ची' इत्यमरः; वलयेन अनुविद्धः बद्धः श्रोणीभरः कटिभरः यस्याः सा; 'कटिः श्रोणी ककुद्मती' इत्यमरः । अर्णवरत्नगर्भवेलासमालिङ्गितसैकतान्ता—अर्णवस्य रत्नानि गर्भे यस्यास्तया वेलया सीमया; 'वेला कालमर्यादयोरपि' इत्यमरः; समालिङ्गितं परिवृतं यत्सैकतं सिकतामयप्रदेशः तेन अन्ता रम्या, 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे' इति विश्वः ॥ ९६ ॥

सुरार्णवावर्तमनोज्ञशोभं
नतभ्रुवोऽलक्ष्यत नाभिरन्ध्रम् ।
कुचाद्रिकान्तिद्रवनिर्झरस्य
निम्नीकृतं स्थानमिव प्रपातैः ॥ ९७ ॥

व्या ॥ सुरेत्यादि । सुरार्णवावर्तमनोज्ञशोभम्—सुरार्णवस्य सुरासमुद्रस्य आवर्तस्य जलभ्रमस्येव मनोज्ञा शोभा यस्य तत् । नतभ्रुवः—

नते भ्रुवौ यस्याः सुन्दर्याः । नाभिरन्ध्रम् नाभिकुहरम् । कुचाद्रिकान्तिद्रवनिर्झरस्य—कुचावेव अद्री तयोः कान्तिद्रवस्य शोभास्यन्दस्य एव निर्झरस्य जलप्रवाहस्य । निम्नीकृतं श्वभ्रीकृतम् । प्रपातैः पतनैः ॥९७॥

तस्या वपुःक्षेत्रमनङ्गशालि
सौन्दर्यनिष्यन्दजलैर्निषेक्तुम् ।
आसूत्रिता यौवनहालिकेन
त्रयीव कुल्या त्रिवली चकाशे ॥ ९८ ॥

व्या ॥ तस्या इति । वपुःक्षेत्रम् वपुरेव क्षेत्रं केदारः तत् ; 'केदारः केदरः क्षेत्रम्' इति वैजयन्ती । अनङ्गशालि—अनङ्ग एव शालयः यस्मिन् तत् । सौन्दर्यनिष्यन्दजलैः - सौन्दर्यमेव निष्यन्दजलं स्रावजलं तैः । आसूत्रिता निर्मिता । यौवनहालिकेन यौवनमेव हालिकः कर्षकः तेन ; हलेन खनति इति हालिकः, 'खनत्यनेन तद्वोढास्येदं हालिकसैरिकौ' इत्यमरः । त्रयीव त्रयोऽवयवा यस्याः सा अवयवत्रयविशिष्टा । कुल्या अल्पसरित् ; 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । त्रिवली वलित्रयम् ; त्रयाणां वलीनां समाहारः त्रिवली ॥ ९८ ॥

विलग्नमालग्नवलित्रयीकं
दरिद्रताजन्मगृहं तदीयम् ।
अमर्त्यगङ्गाजलवेणिकाभि-
राश्लिष्टमाकाशमिवाबभासे ॥ ९९ ॥

व्या ॥ विलग्नमिति । विलग्नम् मध्यप्रदेशः ; 'मध्यमश्च विलग्नञ्च' इत्यमरः । आलग्नवलित्रयीकम्—आलग्ना संश्लिष्टा वलित्रयी त्रिवली यस्मिन् तत् । दरिद्रताजन्मगृहम्—दरिद्रताया दारिद्र्यस्य जन्मगृहमुत्पत्तिस्थानम् ; अतिसूक्ष्ममित्यर्थः । अमर्त्यगङ्गाजलवेणिकाभिः—अमर्त्यगङ्गाया देवगङ्गाया जलवेणिकाभिः जलप्रवाहैः ॥ ९९ ॥

तमालनीला नवरोमराजि-
स्तस्या बभौ तामरसेक्षणायाः ।
विवृण्वती बाल्यदशाविनाश-
मुत्पातधूमावलिरुत्थितेव ॥ ६० ॥

व्या ॥ तमालेत्यादि । तमालनीला तमालवन्नीला । विवृण्वती प्रकाशयन्ती । बाल्यदशाविनाशम्—बाल्यदशायाः बाल्यावस्थायाः विनाशम् । उत्पातधूमावलिः—उत्पातधूमस्य दुर्निमित्तसूचकधूमस्य आवलिः पङ्क्तिः ॥ ६० ॥

आतन्वतश्चेतसि कोमलाङ्ग्याः
कोदण्डशिक्षां कुसुमायुधस्य ।
मौर्वी बहिर्बिम्बगतेव मान्या
तन्व्याश्चकाशे तनुरोमरेखा ॥ ६१ ॥

व्या ॥ आतन्वत इति । कोमलाङ्ग्याः—कोमलानि अङ्गानि यस्याः तस्याः । कोदण्डशिक्षां चापाभ्यासम् । कुसुमायुधस्य—कुसुमानि आयुधानि यस्य तस्य । मौर्वी ज्या ; 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । बहिर्बिम्बगता बहिः प्रतिफलिता, प्रत्यक्षविषया इत्यर्थः ॥ ६१ ॥

विजृम्भमाणेन विलङ्घ्य वेलां
तस्यास्तरुण्याः स्तनमण्डलेन ।
निश्शेषमाक्रान्तनिजावकाश-
माकाशमासीदवलग्नशेषम् ॥ ६२ ॥

व्या ॥ विजृम्भमाणेनेति । वेलाम् अवधिम् । निश्शेषम्—निर्गतः शेषः यस्मिन् कर्मणि तत् । आक्रान्तनिजावकाशम्—आक्रान्तः निजः आकाशसम्बन्धी अवकाशः यस्य तत् । अवलग्नशेषम्—अवलग्नेन मध्येन शेषं शिष्टम् ॥ ६२ ॥

मृणालिका विभ्रमदीर्घिकाया
विद्युल्लता यौवनमेघपङ्क्तेः ।
माङ्गल्यमाला मकरध्वजस्य
बाहा बभौ वामविलोचनायाः ॥ ६३ ॥

व्या॥ मृणालिकेति। मृणालिका अल्पा मृणाली मृणालिका, 'मृणाली शतपर्व क्ली बिसं च' इति वैजयन्ती। विभ्रमदीर्घिकायाः विभ्रमाः शोभा एव दीर्घिका वापी तस्याः; 'अथ विभ्रमः शोभायां संशये हावे' इति हेमचन्द्रः, 'वापी तु दीर्घिका' इत्यमरः। माङ्गल्यमाला मङ्गलकरमाला। वामविलोचनायाः—वामे सुन्दरे विलोचने यस्यास्तस्याः ॥ ६३ ॥

आमुक्तमुक्तासरदर्शनीय-
माबिभ्रती कण्ठमतीव रेजे ।
निष्ठ्यूतमुक्तानिकराभिराम-
शङ्खोज्ज्वला सागरवीचिकेव ॥ ६४ ॥

व्या॥ आमुक्तेत्यादि। आमुक्तमुक्तासरदर्शनीयम्—आमुक्तेन आसञ्जितेन मुक्तासरेण मुक्ताहारेण दर्शनीयं मनोहरम्। निष्ठ्यूतमुक्तानिकराभिरामशङ्खोज्ज्वला—निष्ठ्यूतैः उद्गीर्णैः मुक्तानिकरैः मौक्तिकसमूहैः अभिरामः मनोज्ञः यः शङ्खः कम्बुः तेन उज्ज्वला। शङ्खस्य मौक्तिकोत्पत्तिस्थानत्वमुक्तं भावप्रकाशे—'शङ्खो गजश्च क्रोडश्च फणी मत्स्यश्च दर्दुरः। वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः' इति ॥ ६४ ॥

तदाननेन्दुं भुवि निस्सपत्नं
निर्मातुकामेन पितामहेन ।
अकारि पद्मं ध्रुवमात्तगन्ध-
मन्तःकलङ्कं च सुधांशुबिम्बम् ॥ ६५ ॥

व्या ॥ तदित्यादि । तदाननेन्दुम्—तस्या आननमेव इन्दुः तम् । निस्सपत्नम्— निर्गताः सपत्नाः वैरिणः यस्य तम्; 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। निर्मातुकामेन—निर्मातुं कामो यस्य तेन; 'लुम्पेदवश्यमः कृत्ये तुङ्कामनसोरपि' इति मलोपः। आत्तगन्धम् अभिभूतम्; 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः; गृहीतगन्धं च। अन्तःकलङ्कम्—अन्तः मध्ये कलङ्कः यस्मिन् तत् ॥ ६५ ॥

तरुप्रवालाश्चलसौकुमार्यात्
सिन्धुप्रवालाः स्थिरकर्कशत्वात् ।
न जग्मुरस्या नलिनेक्षणाया
बिम्बाधरौपम्यकथाप्रसङ्गम् ॥ ६६ ॥

व्या ॥ तर्वित्यादि। तरुप्रवालाः—तरूणां वृक्षाणां प्रवालाः नवपल्लवाः। चलसौकुमार्यात्—चलं च तत् सौकुमार्यं च तस्मात्; मार्दवस्थैर्याभावात्। सिन्धुप्रवालाः—सिन्धौ समुद्रे स्थिताः प्रवालाः विद्रुमाः; 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे' इत्युभयत्रापि हेमचन्द्रः। स्थिरकर्कशत्वात्—स्थिरं यत् कर्कशत्वं काठिन्यं तस्मात्। बिम्बाधरौपम्यकथाप्रसङ्गम्—बिम्बमिव अधरः तेन औपम्यस्य साम्यस्य या कथा तस्याः प्रसङ्गः प्रस्तावनम् ॥ ६६ ॥

बिम्बाधरोष्ठद्युतिरायताक्ष्या-
स्तस्या विलासस्मित[1]विप्रकीर्णा ।
सन्ध्येव बन्धूकरुचिप्रकाशे
चन्द्रातपैः शारितसन्निवेशा ॥ ६७ ॥

---

[1] द्युति. v. c.

व्या ॥ बिम्बेत्यादि । बिम्बाधरोष्ठद्युतिः—बिम्बमिव अधरोष्ठं तस्य द्युतिः कान्तिः ; अधरश्च ओष्ठं च अधरोष्ठम् ; प्राण्यङ्गत्वादेकवद्भावः। आयताक्ष्याः—आयते दीर्घे अक्षिणी यस्यास्तस्याः। विलासस्मितविप्रकीर्णा—विलासस्मितेन मन्दहासेन विप्रकीर्णा मिश्रा। बन्धूकरुचिः बन्धूकस्य बन्धुजीवकपुष्पस्य रुचिरिव रुचिर्यस्याः सा ; 'बन्धूको बन्धुजीवकः' इत्यमरः। चन्द्रातपैः चन्द्रकान्तिभिः ; 'प्रकाशो द्योत आतपः' इत्यमरः। शारितसन्निवेशा—शारितः शबलितः सन्निवेशः आकृतिः यस्याः सा ; 'शारः शबरवातगोः' इति हेमचन्द्रः ॥ ६७ ॥

नितान्तकान्तालिकचन्द्रलेखा-
निष्य[1]न्दसौन्दर्यमहाप्रणाली ।
सीमान्तरेखा नयनान्तनद्यो-
र्नासा बभासे नवयौवनायाः ॥ ६८ ॥

व्या ॥ नितान्तेत्यादि । नितान्तकान्तालिकचन्द्रलेखानिष्यन्दसौन्दर्यमहाप्रणाली—नितान्तं भृशं कान्तं रम्यं यदलिकं ललाटम् ; 'ललाटमलिकं गोधिः' इत्यमरः ; तदेव चन्द्रलेखा तस्या निष्यन्दं स्रावभूतं यत्सौन्दर्यं तस्य महाप्रणाली जलनिर्गममार्गः। सीमान्तरेखा सीम्नः अवधेः अन्ते रेखा। नयनान्तनद्योः—नयनयोः अन्ते एव नद्यौ तयोः ॥ ६८ ॥

कस्तूरिकाकल्पितपत्त्रलेख-
स्तस्याः कपोलः शशिमण्डलश्रीः ।
आक्रम्य तस्थौ मुकुरस्य शोभा-
मम्भोदवातैर्मलिनोदरस्य ॥ ६९ ॥

---

[1] सौन्दर्यनिष्यन्द. T.

व्या ॥ कस्तूरिकेत्यादि । कस्तूरिकाकल्पितपत्रलेखः—कस्तूरिकया मृगमदेन कल्पिता रचिता पत्रलेखा पत्रवल्ली यस्मिन् सः; 'अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे' इत्यमरः । मुकुरस्य दर्पणस्य ; 'दर्पणे मुकुरादर्शौ' इत्यमरः । अम्भोदवातैः मेघवायुभिः । मलिनोदरस्य—मलिनम् उदरमन्तर्भागः यस्य तस्य ॥ ६९ ॥

बभूव तस्या नयनोत्पलस्य
नीलोत्पलस्यापि महान् विशेषः ।
अमोघमस्त्रं कुसुमायुधस्य
पूर्वं द्वितीयं तु तपस्सु शीर्णम् ॥ ७० ॥

व्या ॥ बभूवेति । नयनोत्पलस्य नयनमेव उत्पलं तस्य । नीलोत्पलस्य नीलं च तत् उत्पलं च नीलोत्पलं तस्य । विशेषः भेदः । अमोघम् अकुण्ठम्[1] तपस्सु माघमासेषु । शीर्णं विशीर्णम्; शिशिरर्तौ तस्य नश्वरत्वात् ॥ ७० ॥

तस्या विशालेन विलोचनेन
विलासगर्भेण विजीयमानाः ।
अद्यापि वासं वनकन्दरेषु
ह्रियेव कुर्वन्ति कुरङ्गशावाः ॥ ७१ ॥

व्या ॥ तस्या इति । विलासगर्भेण विलासाः विभ्रमाः गर्भे यस्य तेन; विजीयमानाः पराजीयमानाः । वनकन्दरेषु—वनस्य कन्दरेषु गुहासु ; 'दरी तु कन्दरो वास्त्री' इत्यमरः । कुरङ्गशावाः—हरिणशिशवः ; 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः', 'पृथुकः शावकः शिशुः' इत्युभयत्रामरः ॥ ७१ ॥

---

[1] कुण्ठम्. M

सौभाग्यवाराकरवीचिकाभ्यां
तारुण्यकल्पद्रुमशाखिकाभ्याम् ।
भ्रूवल्लरीभ्यां वदनं तदीयं
बभाविवाब्जं भ्रमरावलीभ्याम् ॥ ७२ ॥

व्या ॥ सौभाग्येत्यादि। सौभाग्यवाराकरवीचिकाभ्याम्—सौभाग्यं सौन्दर्यमेव वारामाकरः जलनिधिः तस्य वीचिकाभ्याम्। तारुण्यकल्पद्रुमशाखिकाभ्याम्—तारुण्यं यौवनमेव कल्पद्रुमः तस्य शाखिकाभ्यां शाखाभ्याम्। भ्रूवल्लरीभ्यां भ्रुवौ वल्लर्याविव ताभ्याम् ॥ ७२ ॥

रराज राजीवविलोचनाया
ललाटरेखा रचितालकान्ता ।
आलक्ष्यनामाक्षरबिन्दुपङ्क्ति
रनङ्गजैत्रध्वजपट्टिकेव ॥ ७३ ॥

व्या ॥ रराजेति। राजीवविलोचनायाः तामरसेक्षणायाः। रचितालकान्ता—रचितेन समीकृतेन अलकेन चूर्णकुन्तलेन कान्ता मनोहरा। आलक्ष्यनामाक्षरबिन्दुपङ्क्तिः—आलक्ष्या दृश्या नामाक्षराणां बिन्दूनां वर्तुलरेखाणां पङ्क्तिः यस्याः सा। अनङ्गजैत्रध्वजपट्टिका—अनङ्गस्य मारस्य जैत्रः जयशीलो यो ध्वजः तस्य पट्टिका पटी ॥ ७३ ॥

विलोलदृष्टिद्वयलोभनीयं
तस्या मुखं साम्यमुपाचकार ।
परिप्लुतान्तःपरिवर्तमान-
पाठीनयुग्मस्य पयोरुहस्य ॥ ७४ ॥

व्या ॥ विलोलेत्यादि। विलोलदृष्टिद्वयलोभनीयम्—विलोलेन चञ्चलेन दृष्ट्योर्द्वयेन लोभनीयं स्पृहणीयम्। उपाचकार उत्पादयामास।

परिप्लुतान्तःपरिवर्तमानपाठीनयुग्मस्य—परिप्लुतं जलप्लावितम् अन्तःपरिवर्तमानं भ्रमत् पाठीनयोः मीनयोः युग्मं द्वयं यस्मिन् तथाभूतस्य ॥७४॥

गोरोचनागौररुचिर्प्रकाशे
स षट्पदश्यामलकेशपाशा ।
धूमोद्गमैर्धूसरिताग्रभागा
मान्योदया मङ्गलदीपिकेव ॥ ७५ ॥

व्या ।[1] गोरोचनेत्यादि । गोरोचनागौररुचिः—गोरोचनेव गौरी पीता रुचिः शोभा यस्याः सा ; 'पीतो गौरो हरिद्राभः' इत्यमरः । षट्पदश्यामलकेशपाशा—षट् पदानि येषां ते षट्पदाः भ्रमरा इव ; 'षट्पदभ्रमरालयः' इत्यमरः ; श्यामलाः कृष्णाः ; 'कालश्यामलमेचकाः' इत्यमरः ; केशपाशाः केशकलापाः यस्याः सा ; 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । धूमोद्गमैः धूमानामूर्ध्वगतिभिः । धूसरिताग्रभागा—धूसरितः मलिनः अग्रभागः यस्याः सा । मान्योदया—मान्यः उदयः अभ्युदयः प्रादुर्भावश्च यस्याः सा । मङ्गलदीपिका मङ्गलस्य दीपिका ॥ ७५ ॥

अर्धासिकां भर्तुरनन्यलभ्यां
भद्रासने सैव परं प्रपेदे ।
अन्याः किमर्हन्त्यपहाय लक्ष्मीं
वक्षोनिवासं मधुसूदनस्य ॥ ७६ ॥

व्या ॥ अर्धासिकामिति । अर्धासिकाम्—अर्धासनस्थितिम् ; अर्धम् आसिकाया इति विग्रहः । अनन्यलभ्याम् अन्यैरलभ्याम् । भद्रासने मङ्गलसिंहासने । वक्षोनिवासम् उरसि स्थितिम् । मधुसूदनस्य—मधुं सूदयतीति मधुसूदनः तस्य ; विष्णोः ॥ ७६ ॥

महीपतिर्मान्यगुणोज्ज्वलायां
तस्यां महिष्यां तनयाभिलाषी ।

---

[1] गृहाभा. C. V.

प्रदीपधूपप्रमुखैः पदार्थैः
स देवताराधनतत्परोऽभूत् ॥ ७७ ॥

व्या ॥ महीपतिरिति। मान्यगुणोज्ज्वलायाम्—मान्याः श्लाघ्याः ये गुणाः पौशील्यादयः तैरुज्ज्वलायाम्। तनयाभिलाषी—तनयं पुत्रमाभलिषतात ताद्दशः। प्रदीपधूपप्रमुखैः दीपधूपादिभिः। पदार्थैः पूजोपकरणद्रव्यैः। देवताराधनतत्परः—देवताया आराधने तत्परः आसक्तः ॥ ७७ ॥

ममज्ज तीर्थेषु जजाप मन्त्रं
ततान दानानि तपश्चकार।
शुश्राव धर्मं सुजनं सिषेवे
स पुत्रहेतोः सह धर्मपत्न्या ॥ ७८ ॥

व्या ॥ ममज्जेति। तीर्थेषु पुण्यजलेषु। पुत्रहेतोः पुत्रकारणात् ॥ ७८ ॥

इति गतवति पुण्यैर्दीर्घदीर्घेऽपि काले
पतिरवनिपतीनां पुत्ररत्नं न भेजे[1]।
तदपि च ववृधे तत्प्रार्थना तस्य पुंसां
विरमति न हि यत्नः कार्यसिद्धेः पुरस्तात्॥ ७९ ॥

इति बुद्धघोषाचार्यविरचिते पद्यचूडामणिनाम्नि महाकाव्ये सिद्धार्थ-चरिते प्रथमः सर्गः ॥

इतीति। दीर्घदीर्घे—दीर्घाद्दीर्घे; अतिदीर्घ इत्यर्थः। पुत्ररत्नम्—पुत्रश्रेष्ठम्; 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। तदपि कालाविलम्बसत्त्वेऽपि। तत्प्रार्थना तस्य पुत्रस्य प्रार्थना। पुरस्तात् पूर्वम्। सामान्यरूपेण विशेषसमर्थनरूपोऽर्थान्तरन्यासः। मालिनी वृत्तम्; 'ननमययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ७९ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां प्रथमः सर्गः समाप्तः॥

[1] लेभ. M.

श्रीः.

द्वितीयः सर्गः

तत्रान्तरे जगति पूर्वनिमित्तमासीद्
दृष्ट्वा तदद्भुतममर्त्यगणाः समेताः ।
सर्वज्ञतावसर एष भवेति वक्तुं
जग्मुः पुरीं सुरगुरोस्तुषिताभिधानाम् ॥ १ ॥

व्या ॥ तत्रान्तर इति । तत्रान्तरे तस्मिन्नवसरे ; 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥' इत्यमरः । पूर्वनिमित्तम् बुद्धावतारप्राक्तननिमित्तम् । समेताः सङ्गताः । सर्वज्ञतावसरः सर्वज्ञतायाः बुद्धभावस्य ; 'सर्वज्ञः सुगतो बुद्धः' इत्यमरः, अवसरः अनुकूलकालः । तुषिताभिधानाम् तुषित इति सौगतसमये कस्यचिद्देवलोकस्य नाम ; अत्र तु तत्रस्थां पुरीमभिदधाति ; तुषितेति अभिधानं नाम यस्यास्ताम् । अस्मिन् सर्गे वसन्ततिलका वृत्तम्, 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ १ ॥

षड्भिः पद्यैः कुलकेन तुषिताख्यनगरीं वर्णयति—

उत्तुङ्गनीलमणिमन्दिरजृम्भमाण-
रोचिश्छटाच्छुरणशाद्वलितान्तरिक्षाम् ।
प्रक्रीडमानमृगशावविलोलदृष्टि-
च्छायासमुच्चलनचन्द्रकितोपकण्ठाम् ॥ २ ॥

व्या ॥ उत्तुङ्गेत्यादि । उत्तुङ्गनीलमणिमन्दिरजृम्भमाणरोचिश्छटाच्छुरणशाद्वलितान्तरिक्षाम्—उत्तुङ्गम् उन्नतं यन्नीलमणीनाम् इन्द्रनीलानां मन्दिरं गृहं तस्मात् जृम्भमाणा वर्धमाना या रोचिश्छटा कान्तिपरम्परा तस्याः छुरणेन व्यापनेन शाद्वलितं, शादा अस्मिन् सन्तीति शाद्वलं, तथाकृतं शाद्वलितम् ; तादृशम् अन्तरिक्षं गगनं यस्यां सा । प्रक्रीडमान-

मृगशाबविलोलदृष्टिच्छायासमुच्चलनचन्द्रकितोपकण्ठाम्—प्रक्रीडमानानां विहरणशीलानाम्; ताच्छील्ये चानश्; मृगशाबानां मृगशिशूनां विलोला या दृष्टयः तासां छायाया समुच्चलनेन चन्द्रकितः मेचकितः उपकण्ठः प्रान्तदेशः यस्यास्ताम्; 'समौ चन्द्रकमेचकौ' 'उपकण्ठान्तिकाभ्यर्णाभ्यग्राः' इत्युभयत्रामरः ॥ २ ॥

लीलाचकोररसनाञ्चललिह्यमान-
प्रासाददन्तवलभीकिरणप्ररोहाम् ।
तिर्यक्प्रवृत्तमणितोरणदीर्घरश्मि
मालावलीगुणितवन्दनमालिकाभाम् ॥ ३ ॥

व्या ॥ लीलेत्यादि । लीलाचकोररसनाञ्चललिह्यमानप्रासाददन्तवलभीकिरणप्ररोहाम्— लीलाचकोराणां लीलार्थचकोरपक्षिणां रसनाञ्चलैः जिह्वाग्रैः लिह्यमाना आस्वाद्यमानाः प्रासादे स्थिताया दन्तवलभ्याः दन्तमयगोपानस्याः, 'गोपानसी तु वलभी' इत्यमरः, किरणप्ररोहाः रश्म्यङ्कुराः यस्यां ताम् । तिर्यक्प्रवृत्तमणितोरणदीर्घरश्मिमालावलीगुणितवन्दनमालिकाभाम्—तिर्यक्प्रवृत्ता तिरःप्रसारिणी या मणितोरणस्य रत्नमयबहिर्द्वारस्य, 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः, दीर्घाणां रश्मिमालानामावली पङ्क्तिः, तया गुणिताया आवृत्ताया वन्दनमालिकाया मङ्गल्यदाम्नः आभा यस्यां ताम्; 'तोरणोर्ध्वे तु मङ्गल्यं दाम वन्दनमालिका' इति हेमचन्द्रः । सा च रम्भास्तम्भचतुष्टयवेष्टिताम्रपत्ररचिता माला ॥ ३ ॥

शिञ्जानपञ्चशरचाकिनकार्मुकज्या-
झङ्कारवेगचलिताध्वगवामनेत्राम् ।
दर्पान्धदिग्गजकपोलमदप्रवाह-
कल्लोलिनीसलिलकर्दमितप्रतोलीम् ॥ ४ ॥

व्या ॥ शिञ्जानेत्यादि । शिञ्जानपञ्चशरचक्रितकार्मुकज्याझङ्कारवेगचलिताध्वगवामनेत्राम्—शिञ्जाना स्वनन्ती या पञ्चशरस्य मारस्य चक्रितं कुण्डलीकृतं कर्मणे प्रभवति कार्मुकं धनुः तस्य ज्या मौर्वी, 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः, तस्य झङ्कारस्य वेगेन चलिता उद्विग्नाः अध्वगानां प्रोषितानां वामनेत्राः स्त्रियः यस्यां ताम् । दर्पान्धदिग्गजकपोलमदप्रवाहकल्लोलिनीसलिलकर्दमितप्रतोलीम् दर्पेण गर्वेण अन्धानां दिग्गजानां कपोलेषु यो मदप्रवाहः स एव कल्लोलिनी नदी तस्याः सलिलेन कर्दमिता पङ्किला प्रतोली रथ्या यस्यास्ताम् । समासान्तविधेरनित्यत्वान्न कप् ॥ ४ ॥

शम्पासहस्रचतुरश्रसरोरुहाक्षी-
देहप्रभापुनरुदीरितदीपमालाम् ।
सौधस्थलोपरिसमुच्छ्रितवैजयन्ती-
चीनांशुकाकलितदिग्वनितावगुण्ठाम् ॥ ५ ॥

व्या ॥ शम्पेत्यादि । शम्पासहस्रचतुरश्रसरोरुहाक्षीदेहप्रभापुनरुदीरितदीपमालाम्—शम्पानां विद्युतां, 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः, सहस्रस्य चतुरश्राः अन्यूनानतिरिक्ताः; समा इति यावत्; याः सरोरुहाक्षीणां देहप्रभाः ताभिः पुनरुदीरिताः पुनरुक्ताः दीपमालाः यस्यां ताम् । सौधस्थलोपरिसमुच्छ्रितवैजयन्तीचीनांशुकाकलितदिग्वनितावगुण्ठाम्—सौधस्थलस्य प्रासाददेशस्य उपरि समुच्छ्रिताया वैजयन्त्याः पताकायाः चीनांशुकेन पट्टाम्बरेण आकलितः कृतः दिग्वनिताया दिगङ्गनाया अवगुण्ठः आवरणं यस्यां ताम् ॥ ५ ॥

पुष्पावचायवलमानपुरन्ध्रिवर्ग-
पीनस्तनोन्नतिविकल्पितकेलिशैलाम् ।

माकन्दकोरकगलन्मकरन्दपूर-
धारानुबद्धपुनरुक्ततटाकतोयाम् ॥ ६ ॥

व्या ॥ पुष्पेत्यादि। पुष्पावचायवलमानपुरन्ध्रिवर्गपीनस्तनोन्नतिविकल्पितकेलिशैलाम्— पुष्पाणामवचायाय लवनाय वलमान उद्वर्तमानः यः पुरन्ध्रीणां कुटुम्बिनीनां वर्गः तस्य पीनयोः पीवरयोः स्तनयोरुन्नत्या विकल्पितः संदिग्धः केलिशैलः क्रीडाशैलः यस्यां ताम्। माकन्दकोरकगलन्मकरन्दपूरधारानुबद्धपुनरुक्ततटाकतोयाम्— माकन्दकोरकेभ्यः चूतमुकुलेभ्यः गलन्त्यः स्रवन्त्यः मकरन्दपूराणां धाराः मधुप्रवाहसन्ततयः ताभिरनुबद्धम् अनुसृतम् अतएव पुनरुक्तं द्विगुणितं तटाकतोयं यस्यां ताम् ॥ ६ ॥

शृङ्गारमण्डपशिरोनवरत्नतेजः-
संचारसंचितशतक्रतुचापशोभाम्।
मन्दारकल्पहरिचन्दनपारिजात-
संतानसंहृतदरिद्रकथाप्रसङ्गाम् ॥ ७ ॥

व्या ॥ शृङ्गारेत्यादि। शृङ्गारमण्डपशिरोनवरत्नतेजःसंचारसंचितशतक्रतुचापशोभाम्—शृङ्गारमण्डपस्य लीलामण्डपस्य शिरसि खचितानां नवरत्नानां तेजःसंचारेण कान्तिप्रसरेण संचिता सम्पादिता शतक्रतुचापस्य इन्द्रधनुषः शोभा यया ताम्। मन्दारकल्पहरिचन्दनपारिजातसंतानसंहृतदरिद्रकथाप्रसङ्गाम्—मन्दारादिभिः पञ्चभिः देववृक्षैः संहृतः अपहृतः दरिद्रा इति कथाप्रसङ्गः दारिद्र्यविषयकव्यवहारः यस्यां ताम् ॥ ७ ॥

तत्र स्थित सुरगणा ददृशुस्तमेनं
सिंहासने विविधरत्नशिलानिबद्धे।

विभ्राजमानबहुधातुविचित्रवर्णे
मेरोर्मृगेन्द्रमिव सानुतटप्रदेशे ॥ ८ ॥

व्या ॥ तत्रेति । एनम् सुराधिपम् । विविधरत्नशिलानिबद्धे—विविधाभिः रत्नरूपशिलाभिः निबद्धे निर्मिते । विभ्राजमानबहुधातुविचित्रवर्णे—विभ्राजमानैः दीप्तैः बहुभिर्धातुभिः गैरिकादिभिः विचित्रवर्णे शबलवर्णे॥८॥

त्रयोविंशत्या[1] पद्यैः नृपिताधिपं वर्णयति—

माणिक्यमौलिवलभीसविधस्थितेन
मान्येन मङ्गलसितातपवारणेन ।
पूर्वाचलस्य सुषमां मणितुङ्गशृङ्ग-
संलक्ष्यपूर्णशशिनः प्रतिपक्षयन्तम् ॥ ९ ॥

व्या॥ माणिक्येत्यादि। माणिक्यमौलिवलभीसविधस्थितेन—माणिक्यमयः मौलिः शिरोभागः यस्यास्तस्या वलभ्याः गोपानस्याः सविधे समीपे स्थितेन। मङ्गलसितातपवारणेन—मङ्गलार्थं यत् सितं धवलम् आतपवारणं छत्रं तेन। मणितुङ्गशृङ्गसंलक्ष्यपूर्णशशिनः—मणितुङ्गशृङ्गे मणिमये उन्नते शृङ्गे संलक्ष्यः सम्यक् प्रकाशमानः पूर्णशशी पूर्णचन्द्रः यस्मिन् तस्य। सुषमां शोभाम्। प्रतिपक्षयन्तम् शत्रूकुर्वन्तम्; तत्सदृशमित्यर्थः ॥ ९ ॥

प्रत्यग्रहाटकशिलाफलकायतस्य
फालस्थलस्य परितः प्रसृतैर्मयूखैः ॥
आशाविशालनयनाननमण्डना(ला)ना-
माकल्पयन्तमिव कान्तिसुधाविभागम् ॥ १० ॥

व्या ॥ प्रत्यग्रेत्यादि । प्रत्यग्रहाटकशिलाफलकायतस्य—प्रत्यग्रं नूतनम्; सद्योद्रुतनिषिक्तमित्यर्थः, 'प्रत्यग्रोऽभिनवो नव्यः' इत्यमरः, यत् हाटकशिलाफलकं स्वर्णशिलातलम्, 'हिरण्यं हेम हाटकम्' इत्य-

---

[1] संक्षिप्त. T. [2] मज्जना. M.

मरः, तद्वदायतस्य विशालस्य । फालस्थलस्य ललाटदेशस्य । आशाविशालनयनाननमण्डलानाम् — आशा दिशः, 'आशाश्च हरितश्च ताः' इत्यमरः, ता एव विशालनयना विशालाक्ष्यः स्त्रियः, तासामाननमण्डलानां मुखमण्डलानाम । आकल्पयन्तम् कुर्वन्तम् । कान्तिसुधाविभागम्— कान्तेरेव सुधायाः विभागं विभजनम् ॥ १० ॥

आयामशालिभिरमन्ददयासमुद्र-
वेलाजलेषु विहरद्भिरपाङ्गपातैः ।
आपादयन्तममराधिपराज्यलक्ष्म्याः
क्रीडासरोरुहततीरिव दिङ्मुखेषु ॥ ११ ॥

व्या ॥ आयामेत्यादि । आयामशालिभिः विस्तृतैः । अमन्ददयासमुद्रवेलाजलेषु——अमन्दाया अधिकाया दयाया एव समुद्रस्य वेलाजलेषु विवृद्धजलेषु। अमराधिपराज्यलक्ष्म्याः देवराज्यश्रियः। क्रीडासरोरुहततीः क्रीडापद्मपरम्पराः । दिङ्मुखेषु दिशामग्रभागेषु ॥ ११ ॥

आकाशकन्दरदरीषु वितायमानै-
रानन्दमन्दहसितैरधिकप्रसन्नैः ।
संधुक्षणाय निजकीर्तिपयःपयोधेः
संपादयन्तमिव शाश्वतमिन्दुलोकम् ॥ १२ ॥

व्या ॥ आकाशेत्यादि । आकाशकन्दरदरीषु आकाशस्य कन्दरा विवरा एव दर्यः गुहाः तासु। वितायमानैः विस्तार्यमाणैः; 'तनोतेर्यकि' इति अन्तादेश आकारः । आनन्दमन्दहसितैः— आनन्दजमन्दहासैः । अधिकप्रसन्नैः अतिनिर्मलैः । संधुक्षणाय वर्धनाय । निजकीर्तिपयःपयोधेः——स्वकीर्तेरेव क्षीरनिधेः । शाश्वतम् सनातनम् ॥ १२ ॥

अभ्यर्णवर्तिभिरकृत्रिमभक्तिशोभै-
रात्मीयबिम्बसदृशैः सह मित्रवर्गैः ।
आभाषणेष्वधरविद्रुमरागलक्ष्या[1]-
दन्तःस्फुरन्तमनुरागमिवोद्गिरन्तम् ॥ १३ ॥

व्या ॥ अभ्यर्णेत्यादि । अभ्यर्णवर्तिभिः समीपे स्थितैः । अकृत्रिमभक्तिशोभैः—अकृत्रिमा नैसर्गिकी भक्तिशोभा येषां तैः । आत्मीयबिम्बसदृशैः स्वप्रतिबिम्बसमैः । अधरविद्रुमरागलक्ष्यात्—अधर एव विद्रुमः प्रवालः तस्य रागस्य रक्तवर्णस्य लक्ष्यात् व्याजात्, 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः । उद्गिरन्तम् बहिः प्रकटयन्तम् ॥ १३ ॥

आनन्दबाष्पजलजर्जरदृष्टिपात-
मभ्युल्लसत्पुलकभूषितगण्डरेखम् ।
आकर्णयन्तमभिजातनिजापदान-
मग्रे कुशीलवगणैरभिगीयमानम् ॥ १४ ॥

व्या ॥ आनन्देत्यादि । आनन्दबाष्पजलजर्जरदृष्टिपातम्—आनन्दबाष्पजलेन आनन्दाश्रुणा जर्जरः शिथिलः दृष्टिपातः कटाक्षपतनं यस्मिन् कर्मणि तत् । अभ्युल्लसत्पुलकभूषितगण्डरेखम्—अभ्युल्लसता उद्गच्छता पुलकेन रोमाञ्चेन भूषिता गण्डरेखा गण्डलेखा यस्मिन् कर्मणि तत् । अभिजातनिजापदानम्—श्रेष्ठं निजं चरितम् । कुशीलवगणैः गायकवर्गैः; 'गायकास्तु कुशीलवाः' इत्यमरः ॥ १४ ॥

कल्पद्रुमप्रसवकल्पितकर्णपूर-
रिञ्छोलिकाविगलितैर्मकरन्दपूरैः ।

---

[1] लक्ष्म्यामन्तः. C., लक्ष्म्याश्चान्तः. P.

बाहुद्वयस्य महनीयपराक्रमस्य
वीराभिषेकमहिमानमिवाचरन्तम् ॥ १५ ॥

व्या ॥ कल्पद्रुमेत्यादि । कल्पद्रुमप्रसवकल्पितकर्णपूररिञ्छोलिका-विगलितैः—कल्पद्रुमाणां प्रसवैः पुष्पैः, 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः, कल्पिताभ्यः रचिताभ्यः कर्णपूराणां कर्णावतंसानां रिञ्छोलिकाभ्यः पङ्क्तिभ्यः, 'रिञ्छोली पङ्क्तिरावली' इति त्रिकाण्डशेषः, विगलितैः निस्सृतैः । मकरन्दपूरैः मकरन्दानां प्रवाहैः; 'मकरन्दः पुष्प रसः' इत्यमरः 'पूरः स्यादम्भसां वृद्धौ' इति हेमचन्द्रः । महनीय-पराक्रमस्य—महनीयः पूजनीयः पराक्रमः विक्रमः यस्य तस्य । वीराभि-षेकमहिमानम्—वीराणां तेजःप्रकाशकस्याभिषेकस्यातिशयम् ॥ १५ ॥

उत्तुङ्गबाहुयुगलोदयशैलजात-
तेजोदिवाकरयशोहिमरश्मिशङ्काम् ।
आतन्वतारुणसितोपलनिर्मितेन
मङ्गल्यकुण्डलयुगेन मनोज्ञगण्डम् ॥ १६ ॥

व्या ॥ उत्तुङ्गेत्यादि । उत्तुङ्गबाहुयुगलोदयशैलजाततेजोदिवाकरय-शोहिमरश्मिशङ्काम्—उत्तुङ्गमुन्नतं यत् बाह्वोर्युगलं तदेव उदयशैलः पूर्वपर्वतः तस्मात् जातौ, यौ तेज इति दिवाकरः यश इति हिमरश्मिश्च, तयोः शङ्काम् । अरुणसितोपलनिर्मितेन—अरुणैः रक्तवर्णैः सितैः धवलैः उपलैः रत्नैः, 'उपलो ग्रावरत्नयोः' इति हेमचन्द्रः, निर्मितेन खचितेन । मङ्गल्यकुण्डलयुगेन—मङ्गल्ययोः मङ्गलकरयोः कुण्डलयोः कर्णाभरणयोः युगेन द्वयेन ॥ १६ ॥

मन्दारपुष्पकलिकापरिकल्पितेन
माल्येन मान्यमजमध्यावलम्बितेन ।

कण्ठप्रणालिमुखगत्वर[1]रक्त[2]धार-
मादर्शयन्तमिव मैत्रबलावतारम् ॥ १७ ॥

व्या ॥ मन्दारेत्यादि । मन्दारपुष्पकलिकापरिकल्पितेन—मन्दारस्य पुष्पकलिकाभिः मुकुलैः परिकल्पितेन रचितेन । मान्यभुजमध्यविलम्बितेन—मान्यं पूज्यं यद्भुजमध्यं वक्षः तत्र विलम्बितेन । कण्ठप्रणालिमुखगत्वररक्तधारम्—कण्ठ एव प्रणालिः जलमार्गः तस्याः मुखात् गत्वरा निस्सृता रक्तधारा यस्य तम् । मैत्रबलावतारम्—मैत्रं बलं यस्य तस्य बुद्धस्य अवतारं भूमौ आविर्भावम् । बुद्धस्य गृध्रकूटवासकाले स्वदायादेन शत्रुणा देवदत्तेन शिल्पिद्वारा प्रहितेन कूटयन्त्रेणाविद्धात्कण्ठाद्रक्तप्रवाहः प्रासरदिति सौगतसमयकथात्रानुसंधेया ॥ १७ ॥

अभ्युद्गतैररुणरागमनोऽभिरामै-
रामुक्तरत्नवलयाङ्कुररश्मिजालैः ।
निर्भिद्यमाननिजशौर्यमहःप्रवाल-
संछादिताविव भुजौ[3] विटपौ दधानम् ॥ १८ ॥

व्या ॥ अभ्युद्गतैरिति । अभ्युद्गतैः बहिर्निस्सृतैः । अरुणरागमनोऽभिरामैः—अरुणरागेण रक्तवर्णेन मनोज्ञैः । आमुक्तरत्नवलयाङ्कुररश्मिजालैः—आमुक्तयोः विधृतयोः रत्नवलययोः रत्नकटकयोः अङ्कुरैरिव स्थितैः किरणसमूहैः । निर्भिद्यमाननिजशौर्यमहःप्रवालसंछादितौ—निर्भिद्यमानैः बहिरुत्थितैः निजयोः शौर्यमहसोः वीर्यतेजसोः प्रवालैः संछादितौ आवृतौ । विटपौ शाखे ॥ १८ ॥

अङ्गैरमन्दहरिचन्दनपङ्कलिप्तै-
रभ्यन्तरेषु कृतकुङ्कुमपत्रलेखैः ।

---

[1] गह्वर. V. T. [2] रत्न. M. T. [3] भुजाविटपौ. T.

पक्षीन्द्रचञ्चुपुटपाटनजर्जराङ्गां
जीमूतवाहनदशामिव दर्शयन्तम् ॥ १९ ॥

व्या ॥ अङ्गैरिति । अमन्दहरिचन्दनपङ्कलिप्तैः —अमन्दं निबिडं यथा तथा हरिचन्दनपङ्केन लिप्तैः रूषितैः । कृतकुङ्कुमपत्ररेखैः —कृताः कुङ्कुमानां पत्ररेखाः पत्रावलयः येषु तैः । पक्षीन्द्रचञ्चुपुटपाटनजर्जराङ्गाम्—पक्षीन्द्रस्य गरुडस्य चञ्चुपुटेन त्रोट्यग्रेण, 'चञ्चुस्त्रोटिरुभे स्त्रियाम्' इत्यमरः; यत्पाटनं विदारणं तेन जर्जराणि शिथिलानि अङ्गानि यस्यां ताम् । जीमूतवाहनदशाम् जीमूतवाहनस्य गन्धर्वराजस्य दशाम् अवस्थाम् । पुरा किल जीमूतवाहनः समयसंरक्षणाय गरुडस्य आहारत्वेन समागतं शङ्खचूडनामानं सर्पं दयया संरक्षितुं स्वशरीरं गरुत्मते आहारत्वेन दत्वा रक्ताप्लुतशरीरोऽभूदिति कथात्रानुसंधेया ॥ १९ ॥

नानाविधाभरणरत्नमरीचिदण्डै-
र्दिङ्मण्डलेषु परितः परिजृम्भमाणैः ।
आगामिबोधिपदवैभवचिह्नभूता-
मृद्धिप्रदर्शनधुरामिव शिक्षयन्तम् ॥ २० ॥

व्या ॥ नानेत्यादि । नानाविधाभरणरत्नमरीचिदण्डैः— नानाविधेषु विचित्रेषु आभरणेषु यानि रत्नानि तेषां मरीचिदण्डैः दण्डसदृशैः किरणैः । आगामिबोधिपदवैभवचिह्नभूताम् —आगामि भावि यद्बोधिपदं बोधिस्थानम्, बोधिर्नाम समाधिभेदः, 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति मेदिनी, तस्य वैभवस्य महिम्नः चिह्नभूतां लक्षणभूताम्; दण्डधारणस्य यतिचिह्नत्वादिति भावः । ऋद्धिप्रदर्शनधुराम्—समृद्धिप्रदर्शनमेव धूः ताम् ॥ २० ॥

आपादपद्ममभितः प्रविजृम्भिताभि-
रम्भोजरागपतकाभरणप्रभाभिः ।

तस्मात्प्रभृत्युपरिभाविमुनित्वमुद्रां
काषायधारणकलामिव शीलयन्तम् ॥ २१ ॥

व्या ॥ आपादेत्यादि । आपादपद्मम्—पादारविन्दमभिव्याप्य प्रविजृम्भिताभिः व्याप्ताभिः । अम्भोजरागपतकाभरणप्रभाभिः—अम्भोजरागाणां पद्मरागाणां, तैः खचितानामित्यर्थः, पतकाभरणानाम् आभरणविशेषाणां प्रभाभिः कान्तिभिः । तस्मात्प्रभृति तत आरभ्य । उपरिभाविमुनित्वमुद्राम्—उपरिभाविनः भविष्यतः मुनित्वस्य मुद्रां लक्षणम् । काषायधारणकलाम—कषायेण रक्तं वस्त्रं काषायं तस्य धारणमेव कला शिल्पम् । शीलयन्तम् अभ्यस्यन्तम् ॥ २१ ॥

संक्रान्तसौधवलभीमणिपुत्रिकेण
वक्षःकवाटफलकेन मनोहरेण ।
साक्षादुरःस्थलविहारिसमुद्रराज-
कन्यस्य कैटभरिपोः कलयन्तमाभाम् ॥ २२ ॥

व्या ॥ संक्रान्तेत्यादि । संक्रान्तसौधवलभीमणिपुत्रिकेण—सङ्क्रान्ता प्रतिफलिता सौधस्य वलभ्यां गोपानस्यां स्थिता मणिपुत्रिका रत्नप्रतिमा यस्मिन् तेन । वक्षःकवाटफलकेन—वक्षः उरः कवाटस्य फलकमिव तेन ; 'उरो वत्सं च वक्षश्च' 'कवाटमररं तुल्ये' इत्युभयत्रामरः । साक्षात् प्रत्यक्षस्य । उरःस्थलविहारिसमुद्रराजकन्यस्य—उरःस्थले वक्षसि विहारिणी विहरमाणा समुद्रराजस्य क्षीराब्धेः कन्या लक्ष्मीः यस्य तस्य । कैटभरिपोः विष्णोः । कलयन्तम् कुर्वन्तम् ॥ २२ ॥

निष्यन्दमानमकरन्दनिरन्तरेण
र[1]क्तोत्पलेन करपङ्कजलालितेन ।

[1] रत्नोत्प. T.

सद्यो विपाटनगलद्रुधिरारुणेन
नेत्रोत्पलेन शिबिराजमिवोपलक्ष्यम् ॥ २३ ॥

व्या ॥ निष्यन्दमानेत्यादि । निष्यन्दमानमकरन्दनिरन्तरेण— निष्यन्दमानैः प्रस्रवद्भिः मकरन्दैः निरन्तरेण नीरन्ध्रेण । रक्तोत्पलेन कोकनदेन । करपङ्कजलालितेन —करौ पङ्कजे इव ताभ्यां लालितेन आदृतेन । सद्योविपाटनगलद्रुधिरारुणेन –सद्यः सपदि विपाटनेन विदारणेन गलता रुधिरेण रक्तेन अरुणेन अरुणवर्णेन । नेत्रोत्पलेन नयनाब्जेन । उपलक्ष्यम् अनुमेयम् । पुरा किल शिबिचक्रवर्ती अभ्यागताय कस्मैचिद्विप्राय स्वीयनयनद्वयमुत्पाट्य दत्तवानिति कथात्रानुसन्धेया ॥ २३ ॥

आलेपचन्दनविसृत्वरगन्धलोभा-
दालीयमानमलिनामभितो निकायम् ।
अज्ञानगाढतिमिरौघमिवान्तरस्थं
तेनैव दिक्षु नितरामपसारयन्तम् ॥ २४ ॥

व्या ॥ आलेपेत्यादि । आलेपचन्दनविसृत्वरगन्धलोभात्—आलेपचन्दनात् अनुलिप्तचन्दनात् विसृत्वरे प्रसरणशीले गन्धे सौरभे लोभात् । आलीयमानम् आश्लिष्यमाणम् । अलिनां भ्रमराणाम् 'मधुलिण्मधुपालिनः' इत्यमरः । अभितः पार्श्वद्वये । निकायम् संघम् ; 'निकायः सद्मसङ्घयोः' इति हेमचन्द्रः । अज्ञानगाढतिमिरौघम्—अज्ञानमेव गाढतिमिरम् गाढान्धकारः[1] तस्य ओघं समूहम् । अन्तरस्थम् हार्दम् । तेनैव पूर्वोक्तरक्तोत्पलेनैव । अपसारयन्तम् दूरीकुर्वन्तम् ॥ २४ ॥

---

[1] न्तिक. V.

आशामुखप्रसृमरैरभिनन्दनीयै-
राश्चर्यसंहननकान्तिसुधाप्रवाहैः ।
आप्लावयन्तमिव निर्जरराजलोक-
मात्मप्रतापतपनातुरमान्तिकस्थम् ॥ २५ ॥

व्या॥ आशेत्यादि। आशामुखप्रसृमरैः—आशामुखेषु दिङ्मुखेषु प्रसृमरैः व्यापनशीलैः। आश्चर्यसंहननकान्तिसुधाप्रवाहैः—आश्चर्यस्य संहननस्य शरीरस्य, 'गात्रं वपुः संहननम्' इत्यमरः, कान्तिरेव सुधा तस्याः प्रवाहैः। आप्लावयन्तम् स्नापयन्तम्। निर्जरराजलोकम् सुरश्रेष्ठानां जनम्। आत्मप्रतापतपनातुरम्—आत्मनः प्रताप एव तपनः सूर्यः, 'तपनः सविता रविः' इत्यमरः, तेनातुरं संतप्तम्। अन्तिकस्थम् समीपस्थम्॥ २५ ॥

आलोलबाहुवलयस्खलनारवार-
वाचालिताखिलहरिन्मुखमण्डलीभिः ।
आरादमर्त्यपुरवारविलासिनीभि-
राधूयमानासितचामरचक्रवालम् ॥ २६ ॥

व्या॥ आलोलेत्यादि। आलोलबाहुवलयस्खलनारवारवाचालिताखिलहरिन्मुखमण्डलीभिः—आलोलानां चञ्चलानां बाह्वोर्वलयानां स्खलनेन परस्परं संघट्टनेन य आरवः शब्दः तेन अरं द्रुतं यथातथा, 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः, वाचालितानि मुखरितानि अखिलानां हरिन्मुखानां मण्डल्यो याभिस्ताभिः; समासान्तविधेरनित्यत्वान्न कम्। अमर्त्यपुरवारविलासिनीभिः— अमर्त्यपुरे देवनगरे स्थिताभिः गणिकाभिः; 'वारस्त्री गणिका वेश्या' इत्यमरः। आधूयमानासितचामरचक्रवालम्—आधूयमानं वीज्यमानं सितानां धवलानां चामराणां चक्रवालं मण्डलं यस्मिन् तम्॥ २६ ॥

---

1 वर. T.

वक्षःस्थलेन वलमानमनोज्ञहार-
तारावलीवलयिना गगनोपमेन ।
आकाशसिन्धुलहरीपरिरभ्यमाण-
माभासयन्तममराद्रितटावलेपम् ॥ २७ ॥

व्या ॥ वक्षःस्थलेनेति । वलमानमनोज्ञहारतारावलीवलयिना — वलमाना लुठन्ती मनोज्ञा च या हारतारावली तारावलीसदृशहारः हारसदृशतारावली च, तस्या वलयः अस्मिन्नस्तीति तद्वता । आकाशसिन्धुलहरीपरिरभ्यमाणम् —आकाशसिन्धोः देवनद्याः लहर्या प्रवाहेण आश्लिष्यमाणम् । आभासयन्तम् परिहसन्तम् । अमराद्रितटावलेपम् अमराद्रेः मेरोः तटस्य अवलेपं गर्वम् ॥ २७ ॥

अम्भोरुहाकृतिमभङ्गुरपद्मराग-
भङ्गीभिरारचितमद्भुतपादपीठम् ।
दानाभिभूतनतपद्मनिधिप्रकाशं
सव्येतरेण चरणेन परामृशन्तम् ॥ २८ ॥

व्या ॥ अम्भोरुहेत्यादि । अम्भोरुहाकृतिम पद्माकारम् । अभङ्गुरपद्मरागभङ्गीभिः—अभङ्गुराभिः अक्षयाभिः पद्मरागाणां भङ्गीभिः विच्छित्तिभिः । आरचितम् निर्मितम् । अद्भुतपादपीठम्—अद्भुतम् आश्चर्यं पादपीठं पादविन्यासपीठम् । दानाभिभूतनतपद्मनिधिप्रकाशम्—दानेन अभिभूतः धिक्कृतः नतः पादनम्रश्च यः पद्मनिधिः नवसु निधिषु अन्यतमः तस्येव प्रकाशो यस्य तत् । सव्येतरेण दक्षिणेन । परामृशन्तम् स्पृशन्तम् ॥ २८ ॥

अङ्घ्रेरलक्तकरसद्युतिहारिणीभि-
रभ्युद्गताभिररुणाङ्गुलिदीधितीभिः ।

वन्दारुदेववदनाम्बुजबोधनाय
बालातपप्रसरवर्षमिवाचरन्तम् ॥ २९ ॥

व्या ॥ अङ्घ्रेरिति । अङ्घ्रेः पादस्य । अलक्तकरसद्युतिहारिणीभिः— अलक्तकरसस्य लाक्षारसस्य द्युतिं हरन्ति मुष्णन्तीति तथोक्ताभिः । अरुणाङ्गुलिदीधितीभिः —अरुणाभिः रक्ताभिः अङ्गुलीनां दीधितीभिः कान्तिभिः; दीधितिशब्दात् 'कृदिकारादक्तिनः' इति ङीष् । वन्दारुदेववदनाम्बुजबोधनाय—वन्दारूणां नम्राणाम्, 'वन्दारुरभिवादुकः' इत्यमरः, देवानां वदनानामेव अम्बुजानां पद्मानां बोधनाय विकासनाय। बालातपप्रसरवर्षम् —बालातपस्य प्रसरमेव व्याप्तिमेव वर्षम् ॥ २९ ॥

नक्षत्रनाथकरकन्दलमांसलेन
नव्येन पादनखदीधितिजालकेन ।
निष्यन्दमानसुरनिर्झरिणीमरन्द-
धाराभिराममचरणाब्जमिवाब्जनाभम् ॥ ३० ॥

व्या ॥ नक्षत्रेत्यादि। नक्षत्रनाथकरकन्दलमांसलेन—नक्षत्रनाथस्य चन्द्रस्य करकन्दलाः किरणाङ्कुरा इव मांसलेन सान्द्रेण। पादनखदीधितिजालकेन—पादनखानां दीधितिजालकेन कान्तिसमूहेन। निष्यन्दमानसुरनिर्झरिणीमरन्दधाराभिरामचरणाब्जम् —निष्यन्दमाना प्रवहन्ती या सुरनिर्झरिणी देवनदी सैव मरन्दधारा मकरन्दप्रवाहः तया अभिरामे चरणाब्जे यस्य तम् । अब्जनाभम् अब्जं नाभौ यस्य तम् विष्णुम्; 'अच्प्रत्यन्ववपूर्वात्' इति सूत्रे 'अच्' इति योगविभागात् समासान्तोऽच्प्रत्ययः ॥ ३० ॥

---

[1] 'ममन्द' M. V.

संसारघोरपरितापजुषां जनानां
सरंक्षणाय किमयं समयो न वेति ।
जिज्ञासया क्ष[1]णमिवावतरीतुकामं
माणिक्यकुट्टिमतलप्रतिमानिभेन ॥ ३१ ॥

व्या. ॥ संसारेत्यादि । संसारघोरपरितापजुषाम्—संसारस्य घोरः भयंकरः यः परितापः तं जुषन्ते भजन्तीति तादृशानाम् । जिज्ञासया ज्ञातुमिच्छया । अवतरीतुकामम्—अवतरीतुं कामो यस्य तम् । माणिक्य-कुट्टिमतलप्रतिमानिभेन—माणिक्यमये कुट्टिमतले निबद्धभूप्रदेशे, 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः, प्रतिमानिभेन प्रतिबिम्बव्याजेन, 'सदृशव्याजयोर्निभः' इति त्रिकाण्डशेषः ॥ ३१ ॥

दृष्ट्वा जगत्त्रयगुरुं शिरसा प्रणेमु-
र्दूराननेन तुषितालयपारिजातम् ।
वाचामतीत्य [2]पदवीमभिवर्तमान-
मार्गैरिरे स्तुतिभिरर्चयितुं च देवाः ॥ ३२ ॥

व्या. ॥ दृष्ट्वेति । जगत्त्रयगुरुम् जगतां त्रयस्य उपदेष्टारम् । दूरानतेन दूरादेवानम्रेण । तुषितालयपारिजातम्—तुषितालयस्य तुषितलोकस्य पारिजातं कल्पद्रुमरूपम् । अतीत्य उल्लङ्घ्य ॥ ३२ ॥

दीनावलोकनदशान्तरजृम्भमाण-
कारुण्यपूरपरिवाहमहाप्रणालैः ।
अस्मानपाङ्ग्य विनिद्रसरोजमुद्रा-
कर्णेजपैस्तव सुरेन्द्र कटाक्षपातैः ॥ ३३ ॥

---

[1] क्षिति. M. [2] वार. M. T.

व्या ॥ दीनेत्यादि । दीनावलोकनदशान्तरजृम्भमाणकारुण्यपूरपरि-वाहमहाप्रणालैः—दीनानामवलोकनदशान्तरे दर्शनावसरे जृम्भमाणः वर्धमानः कारुण्यपूरस्य कारुण्यमेव पूरः जलभरः तस्य परिवाहस्य प्रवाहस्य महाप्रणालैः विशालनिर्गममार्गैः । अपाङ्गय कृपया विलोकय। विनिद्रसरोजमुद्राकर्णेजपैः—विनिद्राणां विकचानां सरोजानां पद्मानां मुद्राया लक्षणस्य कर्णेजपैः सूचकैः ; 'कर्णेजपः सूचकः स्यात्' इत्यमरः ॥ ३३ ॥

स्वैरोज्जिहानसुषमाभरदुग्धसिन्धु-
कल्लोलकन्दलकरम्बितगात्रयष्टे ।
चूडावतंस तुषितालयदेवताना
तुभ्यं नमः परमकारुणिकव्रताय ॥ ३४ ॥

व्या ॥ स्वैरेत्यादि । स्वैरोज्जिहानसुषमाभरदुग्धसिन्धुकल्लोलकन्दल-करम्बितगात्रयष्टे—स्वैरं यथेच्छं यथातथा उज्जिहानः उद्गच्छन् सुषमा-भरः कान्तिसमूह एव यो दुग्धसिन्धुः तस्य कल्लोलकन्दलैः वीचिकन्दलैः करम्बिता व्याप्ता गात्रयष्टिर्यस्य तस्य सम्बुद्धिः । चूडावतंस शिरो-भूषण । परमकारुणिकव्रताय—परमं मुख्यं कारुणिकानां दयालूनां व्रतं यस्य तस्मै ; करुणा शीलमेषामिति कारुणिकाः ; 'स्याद्दयालुः कारुणिकः' इत्यमरः ॥ ३४ ॥

प्रज्ञाप्रधानमहिषीपदपद्म(ह)बन्धं-
संभावनातिशयसम्भृ[1]तनिर्वृताय ।
सर्वोत्तराश्र[2]मकथामृतपानलीला-
गोष्ठीपराय गुणवारिधये नमस्ते ॥ ३५ ॥

---

[1] संभ्रम. V. T. [2] शमधनामृत. V. T.

व्या ॥ प्रज्ञेत्यादि। प्रज्ञाप्रधानमहिषीपदपट्टबन्धसंभावनातिशयसंभृतनिर्वृताय—प्रज्ञाया मेधायाः प्रधानमहिषीपदे मुख्यमहिषीस्थाने पट्टबन्धनहेतुना यः संभावनातिशयः बहुमानातिशयः तेन संभृतं यथातथा निर्वृताय सुखिताय। सर्वोत्तराश्रमकथामृतपानलीलागोष्ठीपराय—सर्वोत्तरः सर्वोत्कृष्टः य आश्रमः तुरीयाश्रमः संन्यासः तत्सम्बन्धिनी कथा एव अमृतं तस्य पानार्था या लीलागोष्ठी तस्यामासक्ताय ॥ ३५ ॥

मैत्रीकलत्रकुचभारपटीरपङ्क-
पत्रावलीमकरिकाङ्कुरम[1]ण्डिताय।
तेजस्तरङ्गितदिगन्तरकन्दराय
त्रैलोक्यभाग्यपरिपाकभुवे नमस्ते ॥ ३६ ॥

व्या ॥ मैत्रीत्यादि। मैत्रीकलत्रकुचभारपटीरपङ्कपत्रावलीमकरिकाङ्कुरमण्डिताय—मैत्र्या एव कलत्रस्य पत्न्याः कुचभारे यः पटीरपङ्कः चन्दनकर्दमः पत्रावल्या मकरिकाङ्कुरश्च ताभ्यां मण्डिताय अलंकृताय। तेजस्तरङ्गितदिगन्तरकन्दराय—तेजसा तरङ्गिता व्याप्ता दिगन्तराण्येव कन्दरा यस्य तस्मै। त्रैलोक्यभाग्यपरिपाकभुवे—त्रैलोक्यभाग्यस्य यः परिपाकः फलोन्मुखत्वं तस्य भुवे उत्पत्तिस्थानाय ॥ ३६ ॥

वाग्प्रतापवडवानलकीलजाल-
जाज्वल्यमानजननार्णवधर्मनावे।
दिक्पालशेखरगिरितशासनपत्रिकाय
दिव्यानुभाव जगदेकगुरो नमस्ते ॥ ३७ ॥

[1] पण्डिताय T. C. M. V.

व्या ॥ मारेत्यादि। मारप्रतापबडबानलकीलजालजाज्वल्यमान-जननार्णवधर्मनावे—मारप्रताप एव बडबानलः और्वाग्निः तस्य कीलजालैः ज्वालासमूहैः ; 'बाडबो बडबानलः' 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्युभयत्रामरः ; जाज्वल्यमानः यः जननमेव अर्णवः ; संसारसागर इत्यर्थः ; तस्य धर्मनावे धर्माय नावे ; अनातरतरये इति यावत् । दिक्पालशेखरितशासनपत्रिकाय—दिक्पालैः शेखरिता शिरोभूषणीकृता ; शिरोभिरुह्यमानेत्यर्थः ; शासनपत्रिका आज्ञापत्रिका यस्य तस्मै ॥ ३७ ॥

निष्यन्दमाननिरपायकृपाप्रवाह-
वीचीविटङ्कवलमानविशालदृष्टे ।
ध्यानामृतद्रवतरङ्गितचित्तवृत्ते
देवादिदेव जगदेकदृशे नमस्ते ॥ ३८ ॥

व्या ॥ निष्यन्देत्यादि । निष्यन्दमाननिरपायकृपाप्रवाहवीचीविटङ्कवलमानविशालदृष्टे—निष्यन्दमानस्य निरपायस्य अविच्छिन्नस्य कृपाप्रवाहस्य वीचीनां विटङ्केषु कपोतपालिकासु, 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः, उन्नतप्रदेशेषु इति यावत्, वलमाने विशाले दृष्टी यस्य तस्य संबुद्धिः । अनेन तस्य दृष्टेः कृपापरिपूर्णत्वमुक्तं भवति । ध्यानामृतद्रवतरङ्गितचित्तवृत्ते—ध्यानमेवामृतद्रवः अमृतस्यन्दः तेन तरङ्गिता चित्तवृत्तिर्यस्य तस्य संबुद्धिः । जगदेकदृशे जगतामेकचक्षुषे ; ज्ञानप्रदायेत्यर्थः ॥ ३८ ॥

निर्व्याजकृत्तगलनिर्गलदस्रधारा-
निर्वापितक्षुधितराक्षसजाठराग्ने ।
निर्वाणकेलिकृतिनिर्मितिसूत्रधार
नेत्राभिराम सुरराज नमो नमस्ते ॥ ३९ ॥

व्या ॥ निर्व्याजेत्यादि । निर्व्याजकृत्तगलनिर्गलदस्रधारानिर्वापितक्षुधितराक्षसजाठराग्ने—निर्व्याजं निष्कपटं यथातथा कृत्तात् छिन्नात्

गलात् निर्गलन्त्या निर्गच्छन्त्या अस्रधारया रक्तप्रवाहेण निर्वापितः शमितः क्षुधितस्य बुभुक्षायुक्तस्य राक्षसस्य जाठराग्निः येन तस्य संबुद्धिः । निर्वाणकेलिकृतिनिर्मितिसूत्रधार—निर्वाणमपवर्ग एव केलिकृतिर्नाट्यं तस्य निर्मितौ प्रवर्तने सूत्रधारः ; सूत्रं नाट्यसाधनं धारयतीति सूत्रधारः—'नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः' - इति तल्लक्षणात्, तत्सदृशः ; प्रारम्भक इति यावत् ॥ ३९ ॥

गन्धर्वराजमहिलाजनगीयमान-
कीर्तिप्रवाहपरिवाहितदिङ्मुखाय ।
भव्यानुरक्षणपराय फलोन्मुखीन-
भाग्याधिकाय भगवन् भवते प्रणामः ॥ ४० ॥

व्या ॥ गन्धर्वेत्यादि । गन्धर्वराजमहिलाजनगीयमानकीर्तिप्रवाहपरिवाहितदिङ्मुखाय—गन्धर्वराजस्य महिलाजनैः स्त्रीजनैः गीयमानेन कीर्तिप्रवाहेण परिवाहितानि प्लावितानि दिङ्मुखानि यस्य तस्मै । भव्यानुरक्षणपराय—भव्यानां भक्तिनम्राणामनुरक्षणे आसक्ताय । फलोन्मुखीनभाग्याधिकाय— फलोन्मुखीनेन फलोन्मुखगामिना; फलप्रदेनेत्यर्थः, भाग्येन अधिकाय उत्कृष्टाय ॥ ४० ॥

नित्यप्रवृत्तनिरवद्यमहाप्रदान-
शोभापराजितसुरद्रुमकामधेनो ।
शुद्धाशयाय सुचरित्रविभूषणाय
तुभ्यं नमस्तुपितलोकधुरंधराय ॥ ४१ ॥

---

[1] स्रीनां. M. T. P.

व्या ॥ नित्येत्यादि । नित्यप्रवृत्तनिरवद्यमहाप्रदानशोभापराजित-सुरद्रुमकामधेनो —नित्यप्रवृत्तानाम् अविच्छिन्नानां निरवद्यानां निर्दुष्टानां महाप्रदानानां शोभया पराजिते सुरद्रुमकामधेनू कल्पवृक्षसुरभी येन तस्य सम्बुद्धिः । शुद्धाशयाय —शुद्धः आशयः यस्य तस्मै; 'अभिप्राय-श्छन्द आशयः' इत्यमरः । सुचरित्रविभूषणाय —सुचरित्रं विभूषण-मलंकारो यस्य तस्मै । तुषितलोकधुरंधराय—तुषितलोकस्य भारवहाय प्रभवे ॥ ४१ ॥

राकासुधाकिरणबिम्बमनोऽभिराम-
वक्त्रावधूतवरवारिजवैभवाय ।
शान्ताशयाय शफरध्वजबाहुवीर्य-
मुष्टिंधयाय मुनिमान्यधिये नमस्ते ॥ ४२ ॥

व्या ॥ राकेत्यादि । राकासुधाकिरणबिम्बमनोऽभिरामवक्त्रावधूत-वरवारिजवैभवाय —राकासुधाकिरणबिम्बमिव पूर्णिमाचन्द्रबिम्बमिव मनोऽभिरामं मनोहरं यद्वक्त्रं तेनावधूतः अवज्ञातः वरवारिजानां श्रेष्ठ-पद्मानां वैभवः महिमा यस्य तस्मै । शफरध्वजबाहुवीर्यमुष्टिंधयाय— शफरः मीनः ध्वजे यस्य तस्य मन्मथस्य यद्बाहुवीर्यं तस्य मुष्टिं धयतीति तादृशाय; विनाशकायेत्यर्थः ॥ ४२ ॥

शृङ्गारितायतदिगन्तमदावलेन्द्र-
शुण्डारकाण्डपरिभावुकबाहुदण्डम्[1] ।
सौन्दर्यकन्दलितचारुमुखारविन्दं[2]
वन्दामहे वरदराज भवन्तमेव ॥ ४३ ॥

व्या ॥ शृङ्गारितेत्यादि । 'शृङ्गारितायतदिगन्तमदावलेन्द्रशुण्डार-काण्डपरिभावुकबाहुदण्डम—शृङ्गारितः मण्डितः, 'शृङ्गारो गजमण्डनः'

---

[1] दण्ड. T. [2] विन्द. T.

इति हेमचन्द्रः, आयतः दिगन्तमदावलेन्द्रस्य दिग्गजश्रेष्ठस्य शुण्डारकाण्डः शुण्डादण्डः तस्य परिभावुकौ शोभया निराकरिष्णू बाहुदण्डौ यस्य तम्। सौन्दर्यकन्दलितचारुमुखारविन्दम्—सौन्दर्येण कन्दलितं चारु मुखारविन्दं यस्य तम् ॥ ४३ ॥

'वीर त्वमेव विजिताखिलदिङ्मुखस्य
मीनध्वजस्य विनिपातविधौ विदग्धः।
सिंहादृते जगति कः खलु धीरचेता
दन्तावलं जयति जर्जरिताद्रिकूटम् ॥ ४४ ॥

व्या ॥ वीरेति। विजिताखिलदिङ्मुखस्य—विजितम् अखिलम् दिङ्मुखम् आशामुखं येन तस्य। मीनध्वजस्य मारस्य। विनिपातविधौ पराजयव्यापारे। विदग्धः समर्थः। सिंहादृते सिंहं विना। धीरचेताः गम्भीरहृदयः। दन्तावलम् गजम्; 'दन्ती दन्तावलो हस्ती' इत्यमरः। जर्जरिताद्रिकूटम्—जर्जरिताः शिथिलीकृताः अद्रीणां कूटाः येन तम् ॥ ४४ ॥

विद्वेषतापमखिलं जगतां विनेतुं
शक्तस्त्वमेव शरणागतपुण्यराशे।
धाराधरं तरलविद्युतमन्तरेण
दावानलं शमयितुं भुवि कः क्षमेत ॥ ४५ ॥

व्या ॥ विद्वेषेत्यादि। विद्वेषतापम्—विद्वेषेण परस्परं क्रोधेन जनितं तापम्। विनेतुम् नाशयितुम्। शरणागतपुण्यराशे—शरणं रक्षितारम्, 'शरणं गृहरक्षित्रोः' इत्यमरः, आगतानां प्राप्तानां पुण्यसमूहरूप। धाराधरम् मेघम्; 'धाराधरो जलधरः' इत्यमरः। तरलविद्युतम्—तरला

विद्युत् यस्य तम्। दावानलम्--वनाग्निम्; 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति यादवः। क्षमेत समर्थो भवेत्॥ ४५॥

मोहान्धकारमुषितानि जगत्त्रयाणि
पुण्याधिक त्वमसि बोधयितुं प्रवीणः।
को वा विकासयितुमर्हति कोकबन्धुं
भानुं विना शरदि पङ्कजकाननानि॥ ४६॥

व्या॥ मोहेत्यादि। मोहान्धकारमुषितानि--मोह एव अन्धकारः तेन मुषितानि; नष्टज्ञानानीत्यर्थः। कोकबन्धुम् कोकानां चक्रवाकानाम्; 'कोकश्चक्रश्चक्रवाकः' इत्यमरः, बन्धुं प्रियम्॥ ४६॥

तृष्णाप्रवाहमवशोषयितुं जनानां
तेजस्विनामधिप दक्षतर[1]स्त्वमेव।
कल्पावसानवडबानलमन्तरेण
कः पारयेज्जगति पातुमपामधीशम्॥ ४७॥

व्या॥ तृष्णेत्यादि। तृष्णाप्रवाहम् आशासंततिम्। अवशोषयितुम् शुष्कीकर्तुम्। दक्षतरः अतिशयेन समर्थः। कल्पावसानवडबानलमन्तरेण--कल्पावसाने प्रलयकाले; 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः, वडबाग्निं विना। पारयेत् शक्नुयात्। पातुम् शोषयितुम्॥ ४७॥

धीर[2] त्वमेव जननाम्बुनिधेस्त्रिलोकीं
पारं परं गमयितुं पटुतामुपैषि।
को वा विहाय भुवने कुहनावराहं
क्षोणीसमुद्धृतिविधौ कुशलः पयोधेः॥ ४८॥

---

[1] तमः M. [2] धीरः. C. P.

व्या ॥ धीरेति । जननाम्बुनिधेः भवसागरात् । कुहनावराहम्—कुहनया दम्भकर्मणा ; 'कुहना दम्भकर्मणि' इति हेमचन्द्रः, कपटवराहरूपिणं विष्णुमित्यर्थः । क्षोणीसमुद्धृतिविधौ—क्षोण्याः भूमेः समुद्धृतेः समुद्धरणस्य विधौ कर्मणि ॥ ४८ ॥

इत्थं सुपर्वविहितां स्तुतिमादरेण
श्रुत्वा प्रसन्नहृदयस्तुषिताधिराजः ।
गम्भीरवारिधरगर्जितम[1]न्दरेण
तान् प्रत्युवाच वचसा मधुराक्षरेण ॥ ४९ ॥

व्या ॥ इत्थमिति । सुपर्वविहिताम्—सुपर्वभिः देवैः विहितां कृताम् 'सुपर्वाणः सुमनसः' इत्यमरः । गम्भीरवारिधरगर्जितमन्दरेण—गम्भीरं यत् वारिधराणां मेघानां गर्जितं ध्वनिः तदिव मन्दरेण, बहलेन, 'मन्दरो मन्थपर्वते । स्वर्गमन्दारयोर्मन्दे बहले' इति हेमचन्द्रः, मधुराक्षरेण—मधुराणि स्वादूनि अक्षराणि यस्मिन् तेन ॥ ४९ ॥

भो भोः पुरन्दरमुखा हरिदन्तपालाः
सम्भूय यूयमिह सादरमागताः किम् ।
कार्यं मया किमपि चेद्व्रतामभीष्ट-
मावेद्यतामलमिह स्तुतिसम्पदेति ॥ ५० ॥

व्या ॥ भो इति । पुरन्दरमुखाः इन्द्रादयः । हरिदन्तपालाः दिगन्तरक्षकाः । संभूय मिलित्वा । किमपि यत्किंचित् । अलं स्तुतिसम्पदा ; स्तोत्रातिशयो न कर्तव्य इत्यर्थः ; निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया ॥ ५० ॥

---

[1] डम्बरेण. M.

तेऽपि प्रसन्नमनसः प्रणिपत्य तस्मै
व्यज्ञापयन् विनयनम्रितपूर्वकायाः ।
देवाधिदेव जगतामवबोधनाय
संतिष्ठते समुचितोऽवसरस्तवेति ॥ ९१ ॥

व्या ॥ तेऽपीति । प्रसन्नमनसः सन्तुष्टचित्ताः । तस्मै तमनुकूलयितुम्; 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी । विनयनम्रितपूर्वकायाः—विनयेन नाम्रितः कायस्य पूर्वभागः यैस्ते । संतिष्ठते सम्प्राप्तः; 'समवप्रविभ्यः स्थः' इति आत्मनेपदम् ॥ ५१ ॥

आकर्ण्य तद्वचनमश्रुतपूर्वमेषां
कालादिचिन्तनपरः क्षणमेष[1] भूत्वा ।
निश्चित्य तत्सकलमेव निधिर्गुणानां
प्रत्यब्रवीत्पुनरमून् प्रथितापदानः ॥ ९२ ॥

व्या ॥ आकर्ण्येति । अश्रुतपूर्वम् पूर्वमश्रुतम् । कालादिचिन्तनपरः—कालादीनां कालदेशव्यक्त्यादीनां चिन्तने आलोचने आसक्तः । प्रथितापदानः—प्रथितम् अपदानं वृत्तकर्म यस्य ॥ ५२ ॥

शुद्धोदनस्य सुततामहमेत्य सत्यं
संबोधनं त्रिजगतां नियतं करिष्ये ।
अङ्गैर्धनैरसुभिरप्यहमेतदेव
संप्राथ्य पुण्यनिच[2]यं कृतवान् पुरेति ॥ ९३ ॥

व्या ॥ शुद्धोदनस्येति । संबोधनम् सम्यक्तत्त्वबोधनम् । नियतं निश्चितम् । असुभिः प्राणैः; 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । एतदेव लोकत्रयसंबोधनमेव । पुण्यनिचयम् पुण्यराशिम् । बुद्धजन्म बहुजन्मसुकृतसाध्यमिति भावः ॥ ५३ ॥

---

[1] व. M. [2] निचयान्. M.

इति कृतवति तस्मिन् सत्यसन्धे प्रतिज्ञां
परहितपरभावे पारमीपारनिष्ठे ।
प्रमुदितमनसस्ते स्फीतरोमाञ्चदण्ड-
प्रचयनिचुलिताङ्गाः प्रत्यगच्छन् यथेच्छम् ॥ ५४ ॥

व्या॥ इतीति । सत्यसन्धे—सत्या सन्धा प्रतिज्ञा यस्य तस्मिन् ; 'सन्धा स्थितिप्रतिज्ञयोः' इति हेमचन्द्रः । परहितपरभावे—परेषां हिते पर उत्कृष्टः भावः आशयः यस्य तस्मिन् । पारमीपारनिष्ठे—परमस्य भावः पारमी ; भावष्यङन्तात् स्त्रियां ङीष् ; तस्याः प्रज्ञादि मुख्यतायाः पारे निष्ठा व्यवस्थितिः यस्य तस्मिन् ; 'निष्ठोत्कर्षव्यवस्थयोः' इति हेमचन्द्रः । स्फीतरोमाञ्चदण्डप्रचयनिचुलिताङ्गाः—स्फीतानां प्रवृद्धानां रोमाञ्च-दण्डानां दण्डाकारपुलकानां प्रचयेन समूहेन निचुलितानि आवृतानि अङ्गानि येषां ते । मालिनी वृत्तम् ॥ ५४ ॥

अथ कानिचिदेव वासराणि
क्षपयित्वा त्रिदिवे स देवराजः ।
विदधे विविधव्रतोज्ज्वलायां
प्रतिसन्धिं पृथिवीपतेर्महिष्याम् ॥ ५५ ॥

इति बुद्धघोषविरचितपद्यचूडामणिनाम्नि महाकाव्ये द्वितीयः सर्गः ॥

व्या॥ अथेति । क्षपयित्वा यापयित्वा । विविधव्रतोज्ज्वलायाम्—विविधैः व्रतैः उपवासादिभिः उज्ज्वलायां दीप्तायाम् । प्रतिसन्धिम् गर्भप्रवेशम् । वियोगिनी वृत्तम्, 'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥ ५५ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां द्वितीयः सर्गः ॥

श्रीः ॥

तृतीयः सर्गः

[1]अथोदयं शाक्यमहीपतीना-
मानन्दमालीजनलोचनानाम् ।
आश्वासनं सज्जनमानसाना-
माधत्त सा दौहृदलिङ्गमार्या ॥ १ ॥

व्या ॥ अथेति । अथ गर्भप्रवेशानन्तरम् । उदयम् अभिवृद्धिकरम् । शाक्यमहीपतीनां शाक्यान्वयजातानां राज्ञाम् । आनन्दम् आनन्दावहम् । आलीजनलोचनानां सखीजननेत्राणाम् । आश्वासनं समाश्वासकरम् । दौहृदलिङ्गम् — गर्भलक्षणम्; 'दोहदं दौहृदं श्रद्धा लालसा सूतिमासि तु' इति 'दोहदं गर्भलक्षणे' इति च हेमचन्द्रः । अस्मिन् सर्गे उपजातिर्वृत्तम् ॥ १ ॥

अथ सप्तभिः पद्यैर्मायादेव्या गर्भलक्षणानि वर्णयति—

विवर्धमानेन च मध्यमेन
श्यामायमानेन च चूचुकेन ।
गर्भोदयोऽभूदलसेक्षणाया-
स्तस्याः सखीनामनुमानगम्यः ॥ २ ॥

व्या ॥ विवर्धमानेनेति । मध्यमेन मध्यभागेन । चूचुकेन कुचाग्रेण; 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः । अलसेक्षणायाः अलसे स्तब्धे ईक्षणे यस्यास्तस्याः । अनुमानगम्यः अनुमानेन गम्यः ज्ञेयः ॥ २ ॥

महामुनीनामपि माननीये
गर्भत्वमातस्थुषि बोधिसत्त्वे ।

---

[1] अथोहितं. P., अथोत्सवं. T

मध्यस्तदीयो मनसोऽपि सूक्ष्मः
प्रियादिव स्फीततरो बभूव ॥ ३ ॥

व्या ॥ महामुनीनामिति । गर्भत्वं गर्भस्थत्वम् । आतस्थुषि अधिष्ठिते । तदीयः मायादेव्याः सम्बन्धी । मनसोऽपि चित्तादपि । सूक्ष्मः अणुः; अणुपरिमाणादपि चित्तात् सूक्ष्मतर इत्यर्थः । प्रियादिव गर्भधारणानिमित्तकानन्दादिवेति हेतूत्प्रेक्षा । स्फीततरः अत्यन्तं स्फीतः ॥ ३ ॥

यथा यथा वृद्धिमवाप तस्या
मध्यं महिष्या महनीयमूर्तेः ।
तथा तथा वृद्धिमवाप गात्र-
मपुत्रताशोककृशस्य भर्तुः ॥ ४ ॥

व्या ॥ यथा यथेति । महनीयमूर्तेः महनीया पूज्या मूर्तिः शरीरं यस्यास्तस्याः । गात्रं शरीरम्; 'गात्रं वपुः संहननम्' इत्यमरः । अपुत्रताशोककृशस्य—अपुत्रतया पुत्राभावेन यः शोकः तेन कृशस्य क्षीणस्य ॥ ४ ॥

स्तनद्वयस्याग्रमभूद्विवर्णं
साकं सपत्नीवदनेन तस्याः ।
किंचाननं गर्भभरालसायाः
कीर्त्या समं पाण्डुरमास भर्तुः ॥ ५ ॥

व्या ॥ स्तनद्वयस्येति । विवर्णं विकृतवर्णम्; नीलवर्णमित्यर्थः । सपत्नीवदनेन—समानः पतिर्यासां तासां मुखेन । गर्भभरालसायाः गर्भभारेण स्तब्धायाः । पाण्डुरं धवलम्; 'हरिणः पाण्डुरः पाण्डुः इत्यमरः ।

मायादेव्याः स्तनाग्रनीलिम्ना गर्भमनुमाय सपत्न्यः ईर्ष्यया विवर्णवदना बभूवुरिति भावः । सहोक्तिरलङ्कारः ॥ ५ ॥

अन्तर्गतस्याद्भुतविक्रमस्य
विश्वत्रयीविस्मयनीयमूर्तेः ।
प्रतापवह्नेरिव धूमजालै-
स्तस्याः स्तनः श्याममुखो बभूव ॥ ६ ॥

व्या ॥ अन्तर्गतस्येति । अन्तर्गतस्य गर्भगतस्य । अद्भुतविक्रमस्य—अद्भुतः विस्मयनीयः विक्रमः यस्य तस्य । विश्वत्रयीविस्मयनीयमूर्तेः—विश्वेषां लोकानां त्रय्या त्रयेण विस्मयनीया मूर्तिः शरीरं यस्य तस्य; 'विश्वं कृत्स्ने च भुवने विश्वदेवेषु नागरे' इति विश्वः, 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । प्रतापवह्नेः प्रतापाग्नेः । श्याममुखः नीलाग्रः ॥ ६ ॥

तस्याः स्तनद्वन्द्वमनिन्दिताङ्ग्याः
श्यामं शिखायामवशेषपाण्डु ।
तटाभिघाताहितपङ्कमुद्रा-
माधत्त नागाधिपकुम्भलक्ष्मीम् ॥ ७ ॥

व्या ॥ तस्या इति । अनिन्दिताङ्ग्याः—अनिन्दितानि अनवद्यानि अङ्गानि यस्यास्तस्याः । शिखायाम् अग्रे; 'शिखाग्रमात्रे चूडायाम्' इति हेमचन्द्रः । अवशेषपाण्डु अग्रभिन्नप्रदेशे धवलम् । तटाभिघाताहितपङ्कमुद्राम्—तटस्याभिघातेन तिर्यग्दन्तप्रहारेण आहिता उत्पादिता पङ्कमुद्रा कर्दमचिह्नं यस्यां ताम् । नागाधिपकुम्भलक्ष्मीम्—नागाधिपस्य ऐरावतस्य कुम्भयोः शोभाम् ॥ ७ ॥

वृद्धा वितेनुर्विविधौषधीभिः
पुत्रस्य रक्षामुदरस्थितस्य ।
सैव स्मरोपद्रवपीडितानां
बभूव रक्षा भुवनत्रयाणाम् ॥ ८ ॥

व्या ॥ वृद्धा इति । वृद्धाः वयोवृद्धाः स्त्रियः । विविधौषधीभिः नानाविधैः ओषधिविशेषैः । उदरस्थितस्य गर्भस्थस्य । स्मरोपद्रवपीडितानाम्—स्मरोपद्रवेण मन्मथबाधया पीडितानां संतप्तानाम् । मारं जेष्यतोऽस्य रक्षया जगत्त्रयमपि माराद्रक्षितमिति भावः । अत्र भुवनत्रयाणामिति उद्भूतावयवभेदविवक्षया बहुवचनमिति बोध्यम् ॥ ८ ॥

पुण्ये मुहूर्ते पुरुहूतलक्ष्मीः
कुलानुरूपं गुरुगर्भवत्याः ।
यथाक्रमं पुंसवनादि कृत्यं
निर्वर्तयामास नृपो महिष्याः ॥ ९ ॥

व्या ॥ पुण्य इति । पुरुहूतलक्ष्मीः इन्द्रसमश्रीः । कुलानुरूपं स्ववंशानुरूपम् । गुरुगर्भवत्याः प्रवृद्धगर्भायाः । यथाक्रमं क्रममनतिक्रम्य, आनुपूर्व्येणेत्यर्थः । पुंसवनादि पुंसवनम् आदि यस्य तत् ; पुमान् सूयते अनेनेति पुंसवनम् । आदिना सीमन्तोन्नयनस्य परिग्रहः ॥ ९ ॥

प्रभातवेलेव सहस्रभानुं
प्रदोषलक्ष्मीरिव शीतरश्मिम् ।

भद्रे मुहूर्ते नृपधर्मपत्नी
प्रासूत पुत्रं भुवनैकनेत्रम् ॥ १० ॥

व्या ॥ प्रभातेत्यादि । भद्रे मङ्गले; 'श्वःश्रेयसं शिवं भद्रम्' इत्यमरः । भुवनैकनेत्रम्—भुवनस्य जगतः एकनेत्रं मुख्यं चक्षुः; ज्ञानप्रदमित्यर्थः ॥ १० ॥

महात्मनस्तस्यावतारकाले तदीयमाहात्म्यसूचकानि असाधारणान्याश्चर्यजातानि वर्णयति एकादशभिः पद्यैः—

तत्रान्तरे तामरसैरुदारै-
रुदञ्चितैरञ्चितपञ्चवर्णैः ।
संछादिता तस्य विहारहेतोः
कृतोपहारेव[1] बभूव पृथ्वी ॥ ११ ॥

व्या ॥ तत्रान्तर इति । तत्रान्तरे सिद्धार्थावतारसमये । उदारैः महद्भिः; 'उदारो दातृमहतोः' इत्यमरः । उदञ्चितैः उद्गतैः । अञ्चितपञ्चवर्णैः—वर्णपञ्चकालङ्कृतैः । संछादिता संछन्ना । विहारहेतोः क्रीडाहेतोः । कृतोपहारा—कृतः अर्पितः उपहारः उपायनं यया सा ॥ ११ ॥

शाखासु शाखासु समुद्भवद्भि-
र्विचित्रपत्रैः शतपत्रजातैः ।
चकाशिरे तस्य विलोकनाय
संजातनेत्रा इव शाखिनोऽपि ॥ १२ ॥

व्या ॥ शाखास्विति । विचित्रपत्रैः—विचित्राणि नानावर्णानि पत्राणि दलानि येषां तैः । शतपत्रजातैः—शतपत्राणां पद्मानां जातैः

[1] कारेव. M.

समूहैः; 'शतपत्रं कुशेशयम्' इत्यमरः। संजातनेत्रा इव चक्षुष्मन्त इव। अत्रावतारकाले वृक्षोत्पन्नेषु पुष्पेषु सिद्धार्थदर्शनैकफलकवृक्षसम्बन्धिनेत्रत्वमुत्प्रेक्ष्यते ॥ १२ ॥

अस्माकमुत्पत्तिरिवात्र भूमौ
बुद्धाङ्कुराणामपि दुर्लभेति।
संदर्शनायेव शरीरभाजां
नालीकमासीन्नभसः स्थलेऽपि ॥ १३ ॥

व्या॥ अस्माकमिति। अस्माकं पद्मानां नः। अत्र आकाशे। बुद्धाङ्कुराणाम्—बुद्धानामभिनवोद्गमानाम्; 'अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे' इति हेमः। दुर्लभा अपूर्वा। शरीरभाजां देहिनाम्। नालीकं पद्मम्; 'नालीकौ पद्मनाराचौ' इति त्रिकाण्डशेषः। गगनारविन्दवत् बुद्धजन्माप्यतिदुर्लभमिति भावः ॥ १३ ॥

अस्योपदेशादखिलोऽपि सत्यं
निर्वाणमभ्येष्यति जीवलोकः।
किमस्मदभ्युज्ज्वलनैरितीव
निर्वाणमीयुर्निरयाग्नयोऽपि ॥ १४ ॥

व्या॥ अस्येति। अस्य सिद्धार्थस्य। निर्वाणं कैवल्यम्। अभ्येष्यति प्राप्स्यति। किम्; न किमपि प्रयोजनमिति भावः। अस्मदभ्युज्ज्वलनैः अस्माकं नरकाग्नीनां ज्वलनैः। इतीव इति मत्वेव। निर्वाणं विश्रान्तिं कैवल्यं च; 'निर्वाणं मोक्षनिर्वृत्योर्विश्रान्तौ करिमज्जने' इति हेमचन्द्रः ॥ १४ ॥

महात्मनस्तस्य महीप्रपात-
गुरूणि पादाक्रमणानि सोढुम्।

अपारयन्तीव भृशं चकम्पे
विश्वंभरा विश्लथशैलबन्धा ॥ १५ ॥

व्या॥ महात्मन इति। महीध्रपातगुरूणि—महीध्राणां पर्वतानाम्, 'महीध्रशिखरिक्ष्माभृदहार्यधरपर्वताः' इत्यमरः, पातवत् पतनवत् गुरूणि दुर्भराणि। पादाक्रमणानि पादविन्यासान्। अपारयन्ती अशक्नुवाना। विश्वंभरा भूमिः; 'रसा विश्वंभरा स्थिरा' इत्यमरः। विश्लथशैलबन्धा—विश्लथाः विशीर्णाः शैलानां गिरीणां बन्धाः अवयवसंबन्धाः यस्यां सा ॥ १५ ॥

तालप्रमाणाः सहसा धरित्रीं
भित्वा समुत्तस्थुरुदप्रवाहाः[1]।
पुण्यात्मनस्तस्य नमस्क्रियार्थं
भुजङ्गलोका इव शेषवश्याः ॥ १६ ॥

व्या ॥ तालेत्यादि। तालप्रमाणाः तालः प्रमाणं येषां ते। उदप्रवाहाः जलप्रवाहाः; अत्र न लुमतेत्यस्य अनित्यत्वेन मांस्पचन्या इत्यत्रेव प्रत्ययलक्षणेन विभक्तिपरकत्वादुदकशब्दस्य उदन् आदेशः। यद्वा उदकशब्दपर्यायः उदशब्दोऽप्यस्ति शब्दरत्नावल्याम्। भुजङ्गलोकाः सर्पजनाः। शेषवश्या शेषस्यानन्तस्य वशंगताः ॥ १६ ॥

अमुष्य सर्वत्र वितायमानै-
राकाशगङ्गासलिलावदातैः।
यशःप्रवाहैरिव लिप्यमाना
दिशः समस्ता[2] विशदीबभूवुः ॥ १७ ॥

[1] उदकप्रवाहाः. C. [2] प्रशस्ताः. T.

व्या ॥ अमुष्येति । वितायमानैः विस्तीर्यमाणैः । आकाशगङ्गासलिलावदातैः—अकाशगङ्गायाः सलिलमिव अवदातैः धवलैः; 'अवदातः सितो गौरः' इत्यमरः । विशदीबभूवुः प्रसेदुः ॥ १७ ॥

जातः पृथिव्यामधिपो मुनीना-
मिति ब्रुवाणा इव विष्टपानाम् ।
[1]'मङ्गल्यशङ्खानकमर्दलाद्य-'
वाद्यप्रभेदाः स्वयमेव रेणुः ॥ १८ ॥

व्या ॥ जात इति । विष्टपानां जगताम्; 'विष्टपं भुवनं जगत्' इत्यमरः । मङ्गल्यशङ्खानकमर्दलाद्यवाद्यप्रभेदाः—मङ्गल्यं मङ्गलकरं शङ्खश्च आनकश्च मर्दलश्च तत् आद्यं येषां ते च ते वाद्यानां प्रभेदाश्च । रेणुः सस्वनुः; 'रण शब्दे' इति धातोर्लिटि रूपम् ॥ १८ ॥

महानुभावस्य महाभिषेक-
संभावनां कर्तुमिव प्रवृत्ताः ।
व्यतीत्य वेलां सकलाः समुद्राः
प्रचेलुरभ्युच्छ्रितवीचिहस्ताः ॥ १९ ॥

व्या ॥ महानुभावस्येति । महाभिषेकसंभावनाम्—महाभिषेकेण जातां संभावनाम् । वेलां कूलम्; 'वेला स्यात् सिन्धोः कूले च भोजने' इति त्रिकाण्डशेषः । अभ्युच्छ्रितवीचिहस्ताः—अभ्युच्छ्रिताः अत्युन्नताः वीचय एव हस्ता येषां ते ॥ १९ ॥

---

[1] मुसल्य. C.

चचाल मेरोरचलाभिधानं
चस्खाल सिन्धोर्लवणोदवार्ता ।
आख्या स्रवन्तीत्यगलत्स्रवन्त्या-
स्थिरेति भूमेरभिधा व्यरंसीत् ॥ २० ॥

व्या ॥ चचालेति । अचलाभिधानम्—न चलतीत्यन्वर्थम् 'अद्रि-गोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इति प्रसिद्धमचल इति अभिधानं नाम; 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । चचाल; अस्योदये अचला अपि संतोषेण ननृतुरिति भावः । लवणोदवार्ता—लवणमुदकं यस्मिन् सः लवणोदः इति वार्ता उदन्तः; 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः; समुद्रः लवणं विहाय माधुर्यं स्वीचकारेति भावः । आख्या नाम । स्रवन्त्याः नद्याः; 'स्रवन्ती निम्नगापगा' इत्यमरः; नद्यः संतोषातिशयजातविस्मयेन स्तिमिता बभूवुरिति भावः । व्यरंसीत् विरराम; रमतेः विपूर्वात् लुङ् । 'व्याङ्-परिभ्यो रमः' इति परस्मैपदम् ॥ २० ॥

ववर्ष वर्षासमयं विनापि
वलाहको वारिधिधीरघोषः ।
आश्चर्यकर्माणि बभूवुरित्थं
जाते सतामग्रसरे कुमारे ॥ २१ ॥

व्या ॥ ववर्षेति । वलाहकः मेघः; 'स्तनयित्नुर्वलाहकः' इत्यमरः । वारिधिधीरघोषः—वारिधिरिव समुद्र इव धीरो गम्भीरो घोषो यस्य सः । आश्चर्यकर्माणि विस्मयनीयकार्याणि । अग्रसरे अग्र-गामिनि; वरिष्ठे इत्यर्थः ॥ २१ ॥

जननोत्सवश्रियं विशेषकेणाह—

आस्फालितानेकमृदङ्गघोष-
वाचालिताशा[1]न्तदरीमुखानाम् ।
आनन्दनृत्तभ्रामिघूर्णमान-
वसुंधरान्दोलित[2]भूधराणाम् ॥ २२ ॥

व्या ॥ आस्फालितेत्यादि । आस्फालितानेकमृदङ्गघोषवाचालिताशान्तदरीमुखानाम्—आस्फालिता वादिता अनेके ये मृदङ्गाः वाद्यभेदाः तेषां घोषेण वाचालितानि मुखरितानि आशान्तेषु दिगन्तेषु विद्यमानानां दरीणां गुहानाम्, 'दरी तु कन्दरो वा स्त्री देवखाताबिले गुहा' इत्यमरः, मुखानि यैस्तेषाम् । आनन्दनृत्तभ्रामिघूर्णमानवसुंधरान्दोलितभूधराणाम्—आनन्दनृत्ते आनन्दकृतनर्तने जाता या भ्रमयः भ्रमणानि ताभिः घूर्णमानया वेष्टमानया वसुन्धरया भूम्या आन्दोलिताश्चालिताः भूधराः पर्वता येषां तेषाम् ॥ २२ ॥

अन्योन्यसंमर्दविशीर्णहार-
मुक्तावलीतारकितस्थ[3]लीनाम् ।
प्रक्षिप्तपिष्टातकपांसुमुष्टि-
शृङ्गारिताशेषदिगन्तगणाम् ॥ २३ ॥

व्या ॥ अन्योन्येत्यादि । अन्योन्यसंमर्दविशीर्णहारमुक्तावलीतारकितस्थलीनाम्—अन्योन्यं परस्परं सम्मर्देन संघट्टनेन विशीर्णेषु छिन्नेषु हारेषु या मुक्तानामावल्यः पङ्क्तयः ताभिस्तारकिताः संजाततारका इव स्थिराः स्थल्यः अकृत्रिमप्रदेशाः येषां तेषाम् । प्रक्षिप्तपिष्टातकपांसुमुष्टि-

---

[1] आकाश. T. P. O [2] अशेष. V. [3] लीतल. O. P. V.

शृङ्गारिताशेषदिगन्तराणाम्—प्रक्षिप्तानां विकीर्णानां पिष्टातकपांसूनां गन्धचूर्णानाम्, 'पिष्टातः पटवासकः' इत्यमरः, मुष्टिभिः शृङ्गारितानि अलंकृतानि अशेषाणि दिशामन्तराणि अवकाशा यैस्तेषाम् ॥ २३ ॥

परस्पराक्षिप्तविभूषणानां
पर्यस्तचूडामणिशेखराणाम् ।
एकालयस्येव जगंत्रयाणां
बभूव तज्जन्ममहोत्सवश्रीः ॥ २४ ॥

व्या ॥ परस्परेत्यादि । परस्पराक्षिप्तविभूषणानाम्—परस्परम् अन्योन्यम् आक्षिप्तानि संमर्दातिशयेनाकृष्टानि विभूषणानि आभरणानि यैस्तेषाम् । पर्यस्तचूडामणिशेखराणाम्—पर्यस्ताः पतिताः चूडामणयं इति शेखरा येषां तेषाम् । एकालयस्येव एकगृहस्येव । जगत्रयाणाम्; अत्र जगत्रयशब्दः भुवनत्रयपरः लक्षणया तत्स्थः जनपरश्च यथासंभवं योज्यः । तज्जन्ममहोत्सवश्रीः—तस्य सिद्धार्थस्य जन्ममहोत्सवस्य अवताररूपमहोत्सवस्य श्रीः शोभा । बभूव; यथा एकस्मिन् गृहे स्थिताः सर्वे जनाः स्वगृहप्रवर्तमानोत्सवसमये युगपन्मुदिताः संभ्रान्ताश्च वर्तन्ते तद्वत् भुवनत्रये विद्यमानाः सर्वेऽपि जनाः बभूवुरिति भावः ॥ २४ ॥

प्रत्यग्रगर्भच्छविपाटलेन
सुतेन माता सुतरां चकाशे ।
[1]नव्योदयालोहितविग्रहेण
वेलेव बालेन सुधाकरेण ॥ २५ ॥

---

[1] नवो. M., सन्ध्यो. P.

व्या ॥ प्रत्यग्रेत्यादि । प्रत्यग्रगर्भच्छविपाटलेन—प्रत्यग्रया अभिनवया, 'प्रत्यग्रोऽभिनवो नव्यः' इत्यमरः, गर्भच्छव्या गर्भकान्त्या पाटलेन श्वेतरक्तवर्णेन; 'श्वेतरक्तस्तु पाटलः' इत्यमरः। नव्योदयालोहितविग्रहेण—नव्योदयेन नूतनाविर्भावेन आलोहितः ईषद्रक्तः विग्रहः शरीरं यस्य तेन; 'शरीरं वर्ष्म विग्रहः' इत्यमरः। वेलेव जलध्याद्धिरिव ॥ २९ ॥

प्रतप्तचामीकरभास्वरेण
प्रसर्पता तस्य शरीरभासा ।
प्रसूतिकागर्भगृहप्रदीपाः
प्रत्यूषताराप्रतिमा बभूवुः ॥ २६ ॥

व्या ॥ प्रतप्तेत्यादि । प्रतप्तचामीकरभास्वरेण—प्रतप्तचामीकरमिव द्रुतसुवर्णमिव भास्वरेण प्रकाशमानेन; 'चामीकरं जातरूपम्' इत्यमरः । प्रसर्पता विसृत्वरेण । शरीरभासा शरीरकान्त्या; भाः शब्दः पुंलिङ्गोऽपि, 'बाहुगवेधू रा गौर्भाः' इति पुंस्त्रीलिङ्गाधिकारे हेमचन्द्रेण पठितत्वात् । प्रसूतिकागर्भगृहप्रदीपाः प्रसूतिकायाः प्रसूताया गर्भगृहे अन्तर्गृहे स्थिता दीपाः; 'प्रसूता च प्रसूतिका' इत्यमरः । प्रत्यूषतारप्रतिमाः प्रभातसमयनक्षत्रसमाः ॥ २६ ॥

अत्यद्भुतामात्मजजन्मवार्तां
शृण्वन् स शुद्धान्तजनान्नरेन्द्रः ।
आनन्दमूर्च्छाकुलचित्तवृत्तिः
कर्तव्यमूढः स्तिमितो बभूव ॥ २७ ॥

व्या ॥ अत्यद्भुतामिति । शुद्धान्तजनात् अन्तःपुरजनात्; 'शुद्धान्तश्चावरोधश्च' इत्यमरः । आनन्दमूर्च्छाकुलचित्तवृत्तिः—आन-

न्देन जाता या मूर्छा मोहः तेन आकुला चित्तवृत्तिः मनोव्यापारः यस्य सः । कर्तव्यमूढः इतिकर्तव्यताज्ञानशून्यः । स्तिमितः निश्चेष्टः ॥ २७ ॥

पदार्थमेतत्प्रियदानयोग्य-
मदृष्टवान् स त्रिषु विष्टपेषु ।
सर्वस्वदानेन तथापि राजा
संभावयामास तमत्युदारः ॥ २८ ॥

व्या ॥ पदार्थमिति । पदार्थं वस्तु । एतत्प्रियदानयोग्यम्—एतस्मिन् पुत्रजन्मश्रवणरूपे प्रिये विषये दानार्हम् । अदृष्टवान् न दृष्टवान्, अनालोकितवान् । सर्वस्वदानेन—सर्वस्वस्य सकलैश्वर्यस्य दानेन । तं पुत्रजन्मनिवेदकं शुद्धान्तजनम् । अत्युदारः अतिदाता । संभावयामास सत्कृतवान् ॥ २८ ॥

भद्रे मुहूर्ते स पतिः प्रजानां
ददर्श देव्या स्तिमितायताक्ष[1]ः ।
कुमारमुत्सङ्गतले शयानं
तटे तटिन्या इव हंसशावम् ॥ २९ ॥

व्या ॥ भद्रे इति । स्तिमितायताक्षः—स्तिमिते निश्चले आयते विपुले आक्षिणी यस्य सः । उत्सङ्गतले अङ्कप्रदेशे । तटिन्याः नद्याः । हंसशावं हंसशिशुम्; 'पृथुकः शावकः शिशुः' इत्यमरः ॥ २९ ॥

अश्रान्ततृष्णेन विलोचनेन
मुखेन्दुमास्वादयतः स्वसूनोः ।

---

[1] क्षम्. C. P.

आसीत् पितुः कण्टकिताङ्गयष्टे-[1]
रानन्दबाष्पप्रसरो निरोधः ॥ ३० ॥

व्या ॥ अश्रान्तेत्यादि । अश्रान्ततृष्णेन—अश्रान्ता शान्तिमनापन्ना तृष्णा पुत्रमुखदिदृक्षारूपपिपासा यस्य तेन । कण्टकिताङ्गयष्टेः—कण्टकिता रोमाञ्चं प्राप्ता, 'रोमहर्षे च कण्टकः' इत्यमरः, अङ्गयष्टिः यस्य तस्य । आनन्दबाष्पप्रसरः आनन्दाश्रुप्रवाहः । निरोधदर्शनप्रतिबन्धकः ॥ ३० ॥

स्तनंधयस्याननचन्द्रबिम्ब-
ममन्दसौन्दर्यसुधानिधानम् ।
निपीय नेत्राञ्जलिना नितान्तं
नृपाधिपो निर्वृतिमाससाद ॥ ३१ ॥

व्या ॥ स्तनंधयस्येति । स्तनंधयस्य—स्तनं धयतीति स्तनंधयः बालः तस्य; 'अप्युत्तानशयो वत्सः स्तनपस्तु स्तनंधयः' इति वैजयन्ती । आननचन्द्रबिम्बं मुखचन्द्रमण्डलम् । अमन्दसौन्दर्यसुधानिधानम्—अमन्दं यत्सौन्दर्यं तदेव सुधा तस्या आश्रयम् । नेत्राञ्जलिना नेत्रे एवाञ्जलिस्तेन । निर्वृतिं स्वास्थ्यम्; 'स्वास्थ्ये नाशे च निर्वृतिः' इति वैजयन्ती ॥ ३१ ॥

स जातकर्मादिकमत्युदारं
सूनोः समापय्य[2] पुरोहितेन ।
सिद्धार्थ इत्यस्य जगत्प्रशस्या-
मनन्ययोग्यामकरोदभिख्याम् ॥ ३२ ॥

---

[1] कण्टकितस्वमूर्तेः C.  [2] समापाद्य. C. V.

व्या ॥ स इति। सः राजा। जातकर्मादिकम्—जातकर्म आदि यस्य तत्। समापय्य कारयित्वा। जगत्प्रशस्यां लोकश्लाघनीयाम्। अनन्ययोग्याम्—अन्यस्य योग्या न भवतीत्यनन्ययोग्या, अन्यानर्हां ताम्, सिद्धा अर्था यस्येति व्युत्पत्त्यास्यैव तथात्वात्। अभिख्यां नाम; 'अभिख्या नामशोभयोः' इत्यमरः ॥ ३२ ॥

नवाम्बुवाहेन नभस्स्थलीव
नव्येन तारापतिना निशेव।
मृगेन्द्रशाबेन महाटवीव
विभूषिता संततिरास तेन ॥ ३३ ॥

व्या ॥ नवेत्यादि। तारापतिना चन्द्रेण। मृगेन्द्रशाबेन मृगेन्द्रस्य सिंहस्य शाबेन शिशुना। संततिः वंशः; 'संततिर्गोत्रजननकुलानि' इत्यमरः। विभूषिता अलङ्कृता। आस बभूव; तिङन्तप्रतिरूपकमव्ययमेतत् ॥ ३३ ॥

अव्यक्तवर्णाभिरमुष्य वाग्भि-
र्यथा नृपः प्रीतमना बभूव।
तथा न गानैरपि गायकानां
महाकवीनामपि वाग्विलासैः ॥ ३४ ॥

व्या ॥ अव्यक्तेत्यादि। अव्यक्तवर्णाभिः अस्फुटाक्षराभिः। अमुष्य सिद्धार्थस्य। प्रीतमनाः प्रीतं मनः यस्य सः। वाग्विलासैः रसपुष्टवाग्गुम्भैः ॥ ३४ ॥

निसर्गसौरभ्यनितान्तहृद्यं
तस्याननं तादृशसौकुमार्यम्।

बभूव सामान्यमयातयामं
लीलाब्जमन्तःपुरसुन्दरीणाम् ॥ ३५ ॥

व्या ॥ निसर्गेत्यादि । निसर्गसौरभ्यनितान्तहृद्यम्—निसर्गेण स्वभावेन यत्सौरभ्यं मनोज्ञता, सुगन्धता च 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः, तेन नितान्तहृद्यम् अत्यन्तं हृदयप्रियम् । तादृशसौकुमार्यम्—तादृशम् अनुपमं सौकुमार्यं मार्दवं यस्य तत् । सामान्यं साधारणम् । अयातयामं रसपरिपूर्णम्; न यातयाममयातयामम्; 'यातयामं गतरसम्' इत्यमरः। लीलाब्जं क्रीडारविन्दम्; इदं विधेयविशेषणम् ॥ ३५ ॥

मनोऽभिरामैर्मणिकिङ्किणीनां
मातुर्मुदं मांसलयन्निनादैः ।
आत्मीयबिम्बानुनयाभिमान-
श्चिक्रीड सूनुर्मणिमेदिनीषु ॥ ३६ ॥

व्या॥ मनोऽभिरामैरिति । मनोऽभिरामैः मनोहरैः । मणिकिङ्किणीनां नूपुरादिबद्धमणिमयक्षुद्रघण्टिकानाम्; 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । मांसलयन् पोषयन् । आत्मीयबिम्बानुनयाभिमानः—आत्मीयस्य बिम्बस्य प्रतिबिम्बस्य, 'बिम्बं तु प्रतिबिम्बे स्यात्' इति हैमः, योऽनुनयोऽनुसरणं तस्मिन् अभिमान आस्था यस्य सः; स्वस्य प्रतिबिम्बं दृष्ट्वा तदनुसरणे कृतोत्साह इत्यर्थः ॥ ३६ ॥

आतन्वता पांसुविहारमात्रै-
रमात्यपुत्रैः सह बालकेन ।

रामं. C. [2] मुखं. C. P. T. V.
[3] अनुनयाव. C. P. V., बिम्बानन्नुधाव. M.

संग्रामभूधूलिषु भाविनीषु
स्वैरं विहर्तुं विहितेव योग्या ॥ ३७ ॥

व्या ॥ आतन्वतेति। पांसुविहारं रेणुभिः क्रीडाम्। आप्तैः प्रियैः। अमात्यपुत्रैः मन्त्रिकुमारकैः। सङ्ग्रामभूधूलिषु —संग्रामभूः युद्धभूमिः, 'संग्रामाभ्यागमाहवाः' इत्यमरः, तस्याः धूलिषु। भाविनीषु आगामिनीषु। स्वैरं यथेच्छम्। विहिता कृता। योग्या अभ्यासः 'योग्यार्कयोषित्यभ्यासे' इति हेमचन्द्रः ॥ ३७ ॥

स धीरमन्तःपुरसिंहशावैः
संक्रीडमानः सह राजसूनुः।
अत्यद्भुतस्यात्मपराक्रमस्य
शिक्षामिवैषां चिरमन्वतिष्ठत् ॥ ३८ ॥

व्या ॥ स इति। धीरं गम्भीरं यथा तथा। अन्तःपुरसिंहशावैः—शुद्धान्तवर्तिभिः सिंहशिशुभिः। शिक्षां परिचयम्। अन्वतिष्ठत् अनुष्ठितवान्; सिंहादप्यतिरिक्तपराक्रम इति भावः ॥ ३८ ॥

अनुप्रवृत्तान्मणिघण्टिकाना-
मारावहर्षाद्गृहराजहंसान्।
तताट[1] पादेन तदीयराज-
शब्दासहिष्णुः किल तान् कुमारः ॥ ३९ ॥

व्या ॥ अनुप्रवृत्तानिति। अनुप्रवृत्तान् अनुगतान्। आरावहर्षात् आरावेण जाताद्धर्षात्। गृहराजहंसान् गृहस्थितान् हंसजाति-

[1] तताड. T.

श्रेष्ठान्, 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः। तताड ताडयामास ; तड आहतौ इत्यस्माच्चौरादिकाल्लिट्, चितिस्मृत्यामिति इदित्करणरूपज्ञापकस्य सामान्यापेक्षत्वाण्णिजभावः। तदीयराजशब्दासहिष्णुः किल—तदीयः राजहंससंबन्धी यो राजशब्दस्तस्यासहिष्णुः असहनशील इवेत्युत्प्रेक्षा॥ ३९॥

नखाङ्कुशाघात[1]विधूतमूर्धा
मुखारवप्रस्तुतबृंहितश्रीः ।
मङ्गल्यनिर्वृत्तमदाम्बुरेखो
बालो वितेने मदहस्तिलीलाम् ॥ ४० ॥

व्या॥ नखेत्यादि। नखाङ्कुशाघातविधूतमूर्धा—नखाः केशप्रसाधकनखरा एव अङ्कुशाः तेषामाघातेनाभिघातेन विधूतः कम्पितः मूर्धा शिरः येन सः। मुखारवप्रस्तुतबृंहितश्रीः—मुखारवेण प्रस्तुता आरब्धा बृंहितस्य गजगर्जितस्य श्रीः येन सः ; 'बृंहितं करिगर्जितम्' इत्यमरः। मङ्गल्यनिर्वृत्तमदाम्बुरेखः—मङ्गल्या मङ्गलार्थं निर्वृत्ता मदाम्बुनः कस्तूरिकाजलस्य रेखा पत्रावली यस्य सः ; अन्यत्र मङ्गल्या मल्लिगन्धिनी निर्वृत्ता जनिता मदाम्बुनो मदजलस्य रेखा राजिः यस्य सः ; 'मङ्गल्यं मल्लिगन्धि यत्' इत्यमरः, 'मदो रेतस्यहंकारे मद्ये हर्षेभदानयोः। कस्तूरिकायां क्षैब्ये च' इति हेमचन्द्रः। मदहस्तिलीलाम्—मदहस्तिनः मत्तगजस्य लीलां क्रीडाम् ॥ ४० ॥

अभ्युल्लसच्चम्पकदामदीप्ति-
रालोकसंभावितजीवलोकः ।

[1] वधूत. T.

स दारको दीप इव प्रदीप्तः
शोकान्धकारं [1]विनिनाय पित्रोः ॥ ४१ ॥

व्या ॥ अभ्युल्लसदित्यादि । अभ्युल्लसच्चम्पकदामदीप्तिः—अभ्युल्लसन्ती प्रकाशमाना चम्पकदाम्नः चम्पकमालाया इव दीप्तिः यस्य सः । आलोकसंभावितजीवलोकः—आलोकेन दर्शनेन प्रकाशेन च संभावितः सत्कृतः जीवलोकः प्राणिवर्गः येन सः । दारकः बालकः; 'दारको भेदके पुत्रे' इति हेमचन्द्रः । शोकान्धकारम्—शोकः अन्धकार इव तम् । विनिनाय उत्सारयामास ॥ ४१ ॥

कृतोपवीतं गलितातिबाल्यं
समस्तविद्यापरिशीलनाय ।
तमर्पयामास कुमारवर्य-
माचार्यहस्तेषु पतिः पृथिव्याः ॥ ४२ ॥

व्या ॥ कृतोपवीतमिति । कृतोपवीतम्—कृतम् उपवीतम् उपनयनसंस्कारः यस्य तम् । गलितातिबाल्यम्—गलितम् अतिबाल्यम् अतिशैशवं यस्मात्तम् । समस्तविद्यापरिशीलनाय—सकलविद्यानामभ्यसनाय । आचार्यहस्तेषु आचार्याणां हस्तेषु; बहुवचनेन एकस्मादाचार्यात् सकलविद्याग्रहणमशक्यं मत्वा अनेकेषु आचार्येषु इति गम्यते ॥ ४२ ॥

स देशिकेन्द्रैरुपदिश्यमाना
विद्याः समस्ताः सकलाः कलाश्च ।
जग्राह मेधावितयाचिरेण
वर्षाघनो वारिनिधेरिवापः ॥ ४३ ॥

---

[1] प्रणिनाय. T. P. C. V.

व्या ॥ स इति । देशिकेन्द्रैः आचार्यश्रेष्ठैः । विद्याः चतुर्दश विद्याः । कलाः चतुःषष्टिकलाः । मेधावितया—मेधा धारणाचतुरा बुद्धिरस्यास्तीति मेधावी, 'धीर्धारणावती मेधा' इत्यमरः 'अस्माया-मेधास्रजो विनिः' इति विनिप्रत्ययः, तस्य भावस्तत्ता तया । वर्षा-घनः वार्षिको मेघः ॥ ४३ ॥

अनन्यसामान्यधियं कुमार-
मासाद्य विद्याः सुतरां विरेजुः ।
शरत्प्रसन्नं गगनावकाशं
ताराधिपस्येव मयूखमालाः ॥ ४४ ॥

व्या ॥ अनन्येत्यादि । अनन्यसामान्यधियम्—अन्येषां सामान्या साधारणा न भवतीत्यनन्यसामान्या धीर्यस्य तम् । शरत्प्रसन्नं शरदा निर्मलम् । गगनावकाशं गगनप्रदेशम् । मयूखमालाः किरणपङ्क्तयः ॥ ४४ ॥

नितान्तमानन्दयता प्रजानां
मनांसि सद्यो हरता तमांसि ।
चन्द्रोदयेनेव महासमुद्रः
शाक्यान्वयस्तेन समुल्ललास ॥ ४५ ॥

व्या ॥ नितान्तमिति । तमांसि तमोगुणान्, तिमिराणि च; 'तमो राहौ गुणे पापे ध्वान्ते' इति हेमचन्द्रः । तेन बालेन । समुल्ललास संतुष्टोऽभवत् ॥ ४५ ॥

प्रभेव भानोः प्रतिभेव सूरेः
शिखेव दीपस्य दयेव साधोः ।
ज्योत्स्नेव चन्द्रस्य सुधेव सिन्धो-
स्तस्योदितासीन्नवयौवनश्रीः ॥ ४६ ॥

व्या ॥ प्रभेति । प्रतिभा तत्तत्कालस्फूर्तिः; 'बुद्धिर्नवनवोन्मेषशालिनी प्रतिभा मता' इत्युक्तेः । सूरेः पण्डितस्य; 'धीमान् सूरिः कृती' इत्यमरः । तस्य बालस्य । नवयौवनश्रीः नवस्य यौवनवयसः श्रीः शोभा ॥ ४६ ॥

आरोप्य तारुण्यविशेषशाणं
रो(रौ)षाणितानीव मनोभवेन ।
अङ्गान्यभिव्यञ्जितलक्षणानि
विभक्तसन्धीनि बभूवुरस्य ॥ ४७ ॥

व्या ॥ आरोप्येति । तारुण्यविशेषशाणम्—तारुण्यस्य यौवनस्य विशेषः अतिशय एव शाणः निकषोपलः; 'शाणस्तु निकषः कषः' इत्यमरः । रौषाणितानि—रोषाणो निकषोपलः, 'रोषाणस्तु घृषिर्घृष्वो हेमादिनिकषाश्मनि' इति वैजयन्ती, तत्र घृष्टानि रौषाणानि, तथा कृतानि रौषाणितानि; करोतिण्यन्तात् कर्मणि क्तः; शाणघृष्टानीत्यर्थः । अभिव्यञ्जितलक्षणानि—अभिव्यञ्जितानि प्रकाशितानि लक्षणानि महाभाग्यसूचकचिह्नानि येषां तानि । विभक्तसन्धीनि—विभक्ता विविच्य गृहीताः सन्धयः अङ्गप्रत्यङ्गमेलनस्थानानि येषु तानि ॥ ४७ ॥

तस्याङ्घ्रियुग्मं सहजाभिरूप्यं
रेखासहस्रारथाङ्गचिह्नम् ।
नव्यानि नालीकवनानि नूनं
नखप्रभाचन्द्रिकया [1]जहास ॥ ४८ ॥

व्या ॥ तस्येति । सहजाभिरूप्यम्—सहजं स्वाभाविकम् आभिरूप्यं मनोहरता यस्य तत् । रेखासहस्रारथाङ्गचिह्नम्—

[1]बभासे C. P. V.

रेखाभूतं यत् सहस्रारं सहस्रम् अराणि नाभिनेमिमध्यगताश्चक्रावयवविशेषा यस्य तत् रथाङ्गं चक्रमेव चिह्नं यस्य तत् । नव्यानि नूतनानि; प्रत्यग्रविकसितानीत्यर्थः । नालीकवनानि पद्मवनानि; 'नालीकौ पद्मनाराचौ' इति त्रिकाण्डशेषः । नखप्रभाचन्द्रिकया—नखानां प्रभैव चन्द्रिका तया । जहास परिजहासेति स्वरूपोत्प्रेक्षा । तया च स्वभावसिद्धनित्याभिरूप्यं तस्य पदद्वन्द्वं सूर्योदयाहितकान्तीनि चन्द्रिकामुकुलितानि च कमलवनानि नखप्रभाव्याजात् परिजहासेति कमलेभ्यः पदयुगलस्य विशेषप्रतीतेर्व्यतिरेकालंकारो ध्वन्यते ॥ ४८ ॥

वलित्रयालंकृतिदर्शनीय-
विलग्नभागो नरपालसूनुः ।
मन्थाचलो वासुकिभोगवेष्ट-
लेखोल्लसन्मध्य इवालुलोके ॥ ४९ ॥

व्या ॥ वलित्रयेत्यादि । वलित्रयालंकृतिदर्शनीयविलग्नभागः—वलीनां त्रयं त्रिवली तदेवालंकृतिः अलंकारः तया दर्शनीयः विलग्नभागः मध्यप्रदेशः यस्य सः; 'मध्यमं च विलग्नं च' इत्यमरः । मन्थाचलः मन्दरपर्वतः । वासुकिभोगवेष्टलेखोल्लसन्मध्यः—वासुकेः सर्पराजस्य; 'शेषोऽनन्तो वासुकिस्तु सर्पराजः' इत्यमरः । भोगस्य शरीरस्य, 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः, वेष्टलेखाभिः वेष्टनराजिभिः उल्लसन् प्रकाशमानः मध्यभागः यस्य सः । आलुलोके ददृशे ॥ ४९ ॥

गुणैः समस्तैः [1]सह राजसूनो-
र्नितम्बबिम्बः प्रथिमानमाप ।

---

[1] अपि. M.

[1]दोषैरशेषैः सममेव तस्य
मध्यप्रदेशः कृशतामयासीत् ॥ ५० ॥

व्या ॥ गुणैरिति । नितम्बबिम्बः नितम्बमण्डलम् । प्रथिमानं पृथुत्वम् । कृशतां तानवम्; शून्यतामिति यावत् । सहोक्त्योः संसृष्टिः ॥ ५० ॥

नाभिह्रदस्तस्य नरेन्द्रसूनोः
रोमावलीकेतननीलयष्टिम् ।
निखातुकामेन मनोभवेन
निर्वर्तितो गर्त इवाबभासे ॥ ५१ ॥

व्या ॥ नाभीत्यादि । नाभिह्रदः—नाभिः ह्रदः इव । रोमावलीकेतननीलयष्टिम्—रोमावली रोमराजिरेव केतनस्य नीलयष्टिः नीलदण्डः ताम् । निखातुकामेन स्थापयितुमिच्छता । निर्वर्तितः निर्मितः । गर्तः अवटः; 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः ॥ ५१ ॥

श्रियः सरोजान्तरदुःस्थिताया
विशृङ्खलं दातुमिवावकाशम् ।
पुण्यात्मनस्तस्य भुजान्तरालं
बभूव विन्ध्याद्रिशिलावि[2]शालम् ॥ ५२ ॥

व्या ॥ श्रिय इति । सरोजान्तरदुःस्थितायाः—सरोजानामन्तेर अन्तर्भागे दुःस्थिताया दुःखेन विद्यमानायाः; पद्मस्य अल्पावकाशत्वात् रात्रौ सङ्कोचस्वभावाच्च । विशृङ्खलं निरर्गलम्; विपुलमित्यर्थः । भुजान्तरालम् उरः । विन्ध्याद्रिशिलाविशालम्—विन्ध्याद्रेः शिलेव विशालं विपुलम् ॥ ५२ ॥

---

[1] द्वेषै. P. [2] विलास म.

[1]शूरस्य तस्य क्षितिपालसूनो-
र्वक्षःकवाटे सति वज्रसारे ।
चक्रुः कवाटं सदनेषु सत्त्वा
विभूषणार्थं न तु रक्षणार्थम् ॥ ५३ ॥

व्या ॥ शूरस्येति । वक्षःकवाटे—वक्ष एव कवाटं तस्मिन्; 'कवाटमररं तुल्ये' इत्यमरः । वज्रसारे—वज्रस्येव सारो यस्य तस्मिन्; 'सारो बले स्थिरांशे च' इत्यमरः । सत्त्वाः प्राणिनः; 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः ॥ ५३ ॥

भुजो भुजङ्गाधिपभोगदीर्घ-
स्तस्य प्रजापालनपण्डितस्य ।
अक्षेपणीयः प्रतिभूपतीनां
त्रैलोक्यरक्षापरिघो बभूव ॥ ५४ ॥

व्या ॥ भुज इति । भुजङ्गाधिपभोगदीर्घः—भुजङ्गाधिपस्यानन्तस्य भोगः काय इव दीर्घः । प्रजापालनपण्डितस्य प्रजारक्षणनिपुणस्य । अक्षेपणीयः अनिराकरणीयः । प्रतिभूपतीनां शत्रुराजानाम् । त्रैलोक्यरक्षापरिघः—त्रैलोक्यरक्षायां लोकत्रयरक्षणे परिघः आयुधविशेषः ॥ ५४ ॥

रेखाभिरत्यन्तपरिस्फुटाभि-
स्तत्कन्धरा बन्धुरसंनिवेशा ।
गाढादरालिङ्गितकान्तिलक्ष्मी-
केयूरमुद्राभिरिवाबभासे ॥ ५५ ॥

व्या ॥ रेखाभिरिति । अत्यन्तपरिस्फुटाभिः सम्यग्विशदाभिः । तत्कन्धरा—तस्य सिद्धार्थस्य कन्धरा ग्रीवा; 'शिरोधिः कन्धरेत्यपि'

[1] सुरस्य. P.

इत्यमरः । बन्धुरसंनिवेशा—बन्धुरः मनोहरः संनिवेशः विन्यासः यस्याः सा; 'बन्धुरो रम्यनम्रयोः' इति हेमचन्द्रः । गाढादरालिङ्गित-कान्तिलक्ष्मीकेयूरमुद्राभिः—गाढं यथा तथा आदरेण आलिङ्गितायाः कान्तेरेव लक्ष्म्याः केयूरमुद्राभिः अङ्गदरेखाभिः ॥ ५५ ॥

मुग्धस्य तस्यास मुखाम्बुजस्य
महोत्पलस्यापि महान् विशेषः ।
वाणीमलोलां वहति स्म पूर्वं
स्वभावलोलामितरत्तु लक्ष्मीम् ॥ ५६ ॥

व्या ॥ मुग्धस्येति । मुग्धस्य मनोहरस्य । तस्य सिद्धार्थस्य । आसेति तिङन्तप्रतिरूपकमव्ययम् । मुखाम्बुजस्य मुखमेवाम्बुजं तस्य । महोत्पलस्य कमलस्य । विशेषः भेदः । वाणीं सरस्वतीम्, वाचम् । अलोलाम् अचञ्चलाम् । पूर्वं पूर्वोक्तं मुखाम्बुजम् । स्वभावलोलां प्रकृति-चपलाम् । इतरत् महोत्पलम् । लक्ष्मीं श्रियम् । व्यतिरेकालङ्कारः ॥ ५६ ॥

वाण्या वरेण्यस्य मुखे वसन्त्या
मञ्जीरशिञ्जानमिवास सूक्तम् ।
नखप्रभेव स्मितचन्द्रिकासी-
न्मुक्ताक्षमालेव च दन्तपङ्क्तिः ॥ ५७ ॥

व्या ॥ वाण्या इति । वरेण्यस्य श्रेष्ठस्य । मञ्जीरशिञ्जानम्—मञ्जीरस्य नूपुरस्य, 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः, शिञ्जानं शिञ्जितम् ; बाहुलकात् भावे शानच् । सूक्तं सुवचनम् । स्मितचन्द्रिका—स्मितं चन्द्रिकेव, चन्द्रिकासममन्दहासः । मुक्ताक्षमाला—मुक्तानामक्षमाला जपमाला ॥ ५७ ॥

तदाननाम्भोरुहकान्तिलक्ष्म्या-
स्तद्गण्डभित्तिर्मणिदर्पणश्रीः ।

तत्कर्णपाशश्च विलासडोला
तदीक्षणं विभ्रमदीर्घिकासीत् ॥ १८ ॥

व्या ॥ तदित्यादि । तदाननाम्भोरुहकान्तिलक्ष्म्याः — तस्य आनने एवाम्भोरुहे पद्मे वसन्त्याः कान्त्या एव लक्ष्म्याः । तद्गण्डभित्तिः—तस्य गण्डाभित्तिः गण्डप्रदेशः ; 'भित्तिः कुड्ये प्रदेशे च' इति हेमचन्द्रः । मणिदर्पणश्रीः—मणिमयस्य दर्पणस्य मुकुरस्य श्रीः । तत्कर्णपाशः—तस्य शोभनः कर्णः ; 'पाशः कचान्ते संघार्थः कर्णान्ते शोभनार्थकः । छात्राद्यन्ते च निन्दार्थः' इति त्रिकाण्डशेषः । विलासडोला—क्रीडार्थप्रेङ्खोलिका ; 'डोला प्रेङ्खोलिका स्त्रियाम्' इत्यमरः ॥ १८ ॥

भ्रूवल्लरी तस्य मनोज्ञमूर्ते-
स्तारांशुलीढोभयकोटिभागा ।
कोदण्डलीलेव विजित्य मारा-[1]
द्वात्मीकृतारोपितभृङ्गमौर्वी ॥ १९ ॥

व्या ॥ भ्रूवल्लरीति । भ्रूवल्लरी भ्रूलता । तारांशुलीढोभयकोटिभागा—तारयोः कनीनिकयोः ; 'तारोऽत्युच्चस्वरे त्रिषु । तारिण्यङ्कदमात्रोः स्त्री न ना ऋक्षाक्षिमध्ययोः' इति त्रिकाण्डशेषः, अंशुभिर्लीढौ व्याप्तौ उभयकोटिभागावग्रभागौ यस्याः सा । कोदण्डलीला धनुर्लीला ; 'धन्व-शरासनकोदण्डकार्मुकम्' इत्यमरः । आत्मीकृता स्वीकृता ; स्वायत्ती-कृतेत्यर्थः । आरोपितभृङ्गमौर्वी—आरोपिता निबद्धा भृङ्गरूपा मौर्वी ज्या यस्याः सा ; 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः ॥ १९ ॥

प्रसन्नमूर्णावलयाभिरामं
ज्योतिर्मयं तस्य मुखारविन्दम् ।

---

[1] वीरमात्मी. M., मारं सञ्जीकृता. T.

भूयिष्ठमन्तर्गतचन्द्रलेखां
बालार्कबिम्बश्रियमाततान॥ ६० ॥

व्या ॥ प्रसन्नामिति । ऊर्णावलयाभिरामम्—ऊर्णायाः भ्रूमध्यस्थितावर्तविशेषस्य, 'ऊर्णा भ्रूमध्यगावर्ते मेषादीनां च लोमनि' इति हेमचन्द्रः, वलयेनाभिरामं मनोहरम् । ज्योतिर्मयं ज्योतिषा प्रचुरम् । अन्तर्गतचन्द्रलेखाम्—अन्तर्गता चन्द्रलेखा चन्द्रकला यस्यास्ताम् ॥६०॥

ऊर्णाभिरामा नरपालसूनो-
र्निटालभूमिर्नितरां चकाशे ।
वप्रक्रियाभ[1]ग्ननिलीनदन्ति-
दन्ताङ्कुरा मेरु[2]शिलातटीव ॥ ६१ ॥

व्या ॥ ऊर्णेत्यादि । निटालभूमिः फालप्रदेशः; 'गोधिर्ललाटमलिकं निटालं फालमर्षकम्' इति पञ्चतत्त्वप्रकाशः । वप्रक्रियाभग्ननिलीनदन्तिदन्ताङ्कुरा—वप्रक्रियया उत्खातकेल्या भग्नाः निलीनाः दन्तिनां गजानां दन्ताङ्कुरा यस्यां सा ॥ ६१ ॥

विनाङ्गरागेण विनाङ्गदेन
विनावतंसेन विना स्रजापि ।
आविष्कृतासेचनका[3]लमासी-
दङ्गं तदीयं नवयौवनेन ॥ ६२ ॥

व्या ॥ विनेति । अङ्गरागेण चन्दनाद्यनुलेपेन । अवतंसेन अलंकारेण । आविष्कृतासेचनकालम्—आविष्कृतः प्रकाशितः आसेचनकालः अभिषेकसमयः येन तत् । अङ्गरागाद्यलंकरणरहितान्यपि तदङ्गानि तस्याभिषेकयोग्यवयस्कतां सूचयामासुरित्यर्थः ॥ ६२ ॥

---

[1] भिन्न. V.    [2] तटीशलेव. C. V.    [3] काम. C. T. V. M.

आनन्दयित्री हरिणेक्षणाना-
मदृष्टपूर्वा पुरुषान्तरेषु ।
निर्व्याजभूषा निखिलाङ्गयष्टे-
स्तस्योदितासीत्समुदायशोभा ॥ ६३ ॥

व्या ॥ आनन्दयित्रीति ॥ आनन्दयित्री संतोषकरी । हरिणेक्षणानां मृगदृशाम् । अदृष्टपूर्वा पूर्वमदृष्टा । पुरुषान्तरेषु—अन्ये पुरुषाः पुरुषान्तराणि तेषु । निर्व्याजभूषा निर्व्याजा - स्वाभाविकी भूषा अलङ्कारः । समुदायशोभा सर्वावयवसमष्टिशोभा ॥ ६३ ॥

विश्वंभरावलयधारणयोग्यबाहोः
सूनोर्नृपः सुरपतिप्रतिमप्रभावः ।
माणिक्यकुम्भभरितैर्मणिमन्त्रपूतै-
स्तीर्थैश्चकार युवराजपदाभिषेकम् ॥ ६४ ॥

इति बुद्धघोषाविरचिते पद्यचूडामणिनाम्नि महाकाव्ये तृतीयः सर्गः ॥

व्या ॥ विश्वंभरेत्यादि । विश्वंभरावलयधारणयोग्यबाहोः—विश्वंभराया भूमेर्वलयं मण्डलमेव वलयं कङ्कणं तस्य धारणे योग्यः अर्हः बाहुः यस्य तस्य । सुरपतिप्रतिमप्रभावः—सुरपतेर्देवेन्द्रस्य प्रतिमः सदृशः प्रभावः महिमा यस्य सः । माणिक्यकुम्भभरितैः—माणिक्यकुम्भेषु माणिक्यमयघटेषु भरितैः पूर्णैः । मणिमन्त्रपूतैः—मणिभिः रत्नविशेषैः मन्त्रैः पूतैः परिशुद्धैः । तीर्थैः पुण्यजलैः; 'तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः । ऋषिजुष्टजले सत्रिण्युपाये' इति हेमचन्द्रः । युवराजपदाभिषेकम्—युवराजस्य पदे स्थाने अभिषेकम्; 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ ६४ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां तृतीयः सर्गः ॥

श्री ॥

चतुर्थः सर्गः ॥

अथो कुमारस्य कुलोद्वहस्य
करग्रहं कारयितुं नरेन्द्रः ।
का[1]सास्य योग्या भुवि कन्यकेति
[2]स चिन्तयामास समेतबन्धुः ॥ १ ॥

व्या ॥ सिद्धार्थस्य विवाहौपयिकमुपोद्घातमाह—अथो इति । अथो यौवराज्ये अभिषेकानन्तरम् । कुलोद्वहस्य वंशधुरंधरस्य । करग्रहं पाणिग्रहम् । कारयितुं निर्वर्तयितुम् । का सा कतमा कन्यकासु । अस्य सिद्धार्थस्य । योग्या रूपादिष्वनुरूपा; भवेदिति शेषः । समेतबन्धुः—समेताः संगताः बन्धवो यस्य सः ॥ १ ॥

तत्रान्तरे को[3]लियभूमिपालः
कुमारिकां मे कुलरत्नदीपाम् ।
दास्यामि सूनोस्तव सर्वथेति
सन्देशपत्रं विससर्ज तस्मै ॥ २ ॥

व्या ॥ तत्रेति । तत्रान्तरे तस्मिन्नवसरे । कोलियभूमिपालः कोलियदेशाधिपः । कुलरत्नदीपाम्—रत्नमिव दीपयति प्रकाशयतीति रत्नदीपा, कुलस्य रत्नदीपा ताम् । सूनोः पुत्रस्येति संबन्धसामान्ये षष्ठी । सन्देशपत्रं लेख्यम् । विससर्ज प्राहिणोत् ॥ २ ॥

आकर्ण्य सन्देशमुखादुदन्त-
मतीव सन्तुष्टमनाः क्षितीशः ।

---

[1] कस्यास्य. C. V. P. & T. [2] संचिन्तया. M. [3] कोलय. V.

[1]तथैव सज्जीक्रियतां त्वयेति
सन्देशमस्मै प्रजिघाय भूयः ॥ ३ ॥

व्या ॥ आकर्ण्येति । सन्देशमुखात् सन्देशपत्रद्वारा । उदन्तं वृत्तान्तम्; 'वृत्तान्त उदन्दः स्यात्' इत्यमरः। तथैव त्वदिष्टानुसारेणैव । सज्जीक्रियतां सज्जं सन्नद्धं क्रियताम् । सन्देशं लेख्यम् । अस्मै कोलियदेशाधिपाय । प्राजिघाय प्रेषयामास; प्रपूर्वात् हिनोतेर्लिट् ॥ ३ ॥

तथेति सोऽपि प्रतिगृह्य तस्य
सन्देशपत्रं समुदीर्णहर्षः ।
प्रचक्रमे कारयितुं कुमार्या
विवाहदीक्षोत्सवमत्युदारम् ॥ ४ ॥

व्या ॥ तथेति । सोऽपि कोलियदेशाधिपोऽपि । समुदीर्णहर्षः समुदीर्णः समुद्भूतो हर्षो यस्य सः । विवाहदीक्षोत्सवम्—विवाहस्य दीक्षा व्रतसंग्रह एवोत्सवः तम्; 'दीक्षा तु व्रतसंग्रहः' इति वैजयन्ती । अत्युदारम् अतिमहान्तम्; 'उदारो दातृमहतोः' इत्यमरः ॥ ४॥

आरोपिताभ्रंकषकेतुमाल-
माबद्धकौशेयवितानशोभम् ।
अभ्युच्छ्रितेन्द्रायुधतोरणाङ्क-
मभ्यन्तरस्थापितपूर्णकुम्भम् ॥ ५ ॥

व्या ॥ आरोपितेत्यादि । आरोपिताभ्रंकषकेतुमालम्—आरोपिता उत्क्षिप्ता अभ्रंकषाणां नभस्स्पृशां केतूनां माला पङ्क्तिर्यस्मिंस्तत् ।

---

[1] तस्मै विसृज्जी. P.T.C.

आबद्धकौशेयवितानशोभम्—आबद्धा उत्पादिता कौशेयस्य पट्टाम्बरस्य, 'कौशेयं कृमिकोशोत्थम्' इत्यमरः, यत् वितानमुल्लोचः, 'अस्त्री वितानमुल्लोचः' इत्यमरः, तत्संबन्धिनी शोभा यस्मिंस्तत्। अभ्युच्छ्रितेन्द्रायुधतोरणाङ्कम्—अभ्युच्छ्रितः उत्क्षिप्तः यः इन्द्रायुधं शक्रधनुरिव, तदाकारक इति यावत्, तोरणे बहिर्द्वारे स्थितोऽङ्कः चिह्नं यस्मिंस्तत्; 'इन्द्रायुधं शक्रधनुः', 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः। तोरणेषु इन्द्रधनुराकाराणि चित्राणि विलिख्यन्ते इति संप्रदायः। तथाच मेघदूते—'तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन' इति। अभ्यन्तरस्थापितपूर्णकुम्भम्—अभ्यन्तरे गृहमध्यदेशे स्थापिताः निक्षिप्ताः पूर्णकुम्भाः भद्रकुम्भाः यस्मिंस्तत् ॥५॥

आस्तीर्णमुक्तासिकताभिराम-
माकीर्णनानाकुसुमोपहारम्।
आरब्धवैवाहिकसंविधान-
मन्तःपुरं भूमिपतेर्बभूव ॥ ६ ॥

व्या॥ आस्तीर्णेत्यादि। आस्तीर्णमुक्तासिकताभिरामम्—आस्तीर्णाभिर्विस्तृताभिर्मुक्ताभिरेव सिकताभिर्वालुकाभिः अभिरामं मनोहरम्। आकीर्णनानाकुसुमोपहारम्—आकीर्णानि नानाविधानि कुसुमानि पुष्पाण्येव उपहाराः उपायनानि यस्मिंस्तत्। आरब्धवैवाहिकसंविधानम्—आरब्धम् उपक्रान्तं वैवाहिकं विवाहप्रयोजनकं संविधानम् आयोजनं यस्मिंस्तत् ॥ ६ ॥

अभ्यक्तगात्रीमधिवासितेन
तैलेन [1]गन्धामलको[2]पलिप्ताम्।

---

[1] तुवरा. C. [2] केन लिप्ताम्. M.

[1]वराङ्गनास्तां मणिकुम्भमुक्तै-
रम्भोभरैः सादरमभ्यषिञ्चन् ॥ ७ ॥

व्या ॥ अभ्यक्तेत्यादि । अभ्यक्तगात्रीम् —अभ्यक्तम् उपलिप्तं गात्रं वपुः यस्यास्ताम् । अधिवासितेन सुरभितेन । गन्धामलकोपलिप्ताम्—गन्धयुतेन आमलकेन धात्रीफलेन, तद्रसेनेति यावत्; उपलिप्तां रूषिताम् । तां राजकुमारीम् । मणिकुम्भमुक्तैः मणिमयकलशावर्जितैः ॥ ७ ॥

स्नानावसाने नरदेवकन्या
पाथोभ[2]रार्द्रं परिमुच्य वासः ।
समाददे चारुतरं दुकूलं
चन्द्रातपं शारदिकेव रात्रिः ॥ ८ ॥

व्या ॥ स्नानेत्यादि । पाथोभरार्द्रम्—पाथसां जलानाम् , 'कबन्ध-मुदकं पाथः' इत्यमरः, भरेण आर्द्रं सिक्तम् । दुकूलं क्षौमम्; 'क्षौमं दुकूलं स्यात् द्वे तु' इत्यमरः । शारदिका शरदि भवा; सन्धि-वेलाद्यृतुनक्षत्रेत्यणि स्वार्थे कः ॥ ८ ॥

ततः प्रकीर्णाभिनवप्रसूने
चतुष्कमध्ये विनिवेश्य सख्यः ।
नानाविधैराभरणैर्नरेन्द्र-
कन्यामलंचक्रुरतिप्रवीणाः ॥ ९ ॥

व्या ॥ तत इति । ततः दुकूलपरिधानानन्तरम् । प्रकीर्णाभिनव-सूने—प्रकीर्णानि विकीर्णानि अभिनवानि प्रसूनानि यस्मिंस्तस्मिन् । चतुष्कस्य चतुःस्तम्भनिर्मितस्य मण्डपस्य मध्ये । अतिप्रवीणाः अलं-करणक्रियायामतीव समर्थाः स्त्रियः ॥ ९ ॥

---

[1] वारा. V.T. [2] भिरा. T.

अन्तःसमावेशितफुल्लमल्ली[1]-
धम्मिल्लबन्धस्तरलेक्षणायाः ।
ततान तारागणशारितस्य
गाढान्धकारस्तबकस्य कान्तिम् ॥ १० ॥

व्या ॥ अन्तरित्यादि । अन्तःसमावेशितफुल्लमल्लीधम्मिल्लबन्धः—अन्तर्भागे समावेशिताः विन्यस्ताः फुल्लाः विकासिताः मल्लयः मल्लिकाः यस्मिन् तादृशः धम्मिल्लबन्धः कचबन्धः ; 'धम्मिल्लः संयताः कचाः' इत्यमरः । तरलेक्षणायाः चञ्चलाक्ष्याः । तारागणशारितस्य—तारागणैर्नक्षत्रसमूहैः शारितस्य चित्रितस्य । गाढान्धकारस्तबकस्य—अन्धतमसबृन्दस्य ॥ १० ॥

आकुञ्चिताग्रैरलकैः प्रशस्तै-
स्तस्या मुखाम्भोरुहमाबभासे ।
तदीयसौरभ्यसमृद्धिलोभा-
दालीयमानैरिव चञ्चरीकैः ॥ ११ ॥

व्या ॥ आकुञ्चितेत्यादि । आकुञ्चिताग्रैः—आकुञ्चितानि ईषद्वक्राणि अग्राणि येषां तैः । अलकैः चूर्णकुन्तलैः । मुखाम्भोरुहं मुखमम्भोरुहमिव । तदीयसौरभ्यसमृद्धिलोभात्—तदीयायां मुखसम्बन्धिन्यां सौरभ्यस्य समृद्धौ लोभात् । आलीयमानैः आश्लिष्यमाणैः । चञ्चरीकैः भ्रमरैः ; 'इन्दिन्दिरश्चञ्चरीकः' इत्यमरः ॥ ११ ॥

सिन्दूरक्लृप्तः क्षितिपालपुत्र्या
विवाहदीक्षातिलको विरेजे ।

---

[1] मल्लि. M. T.

प्राप्ताधिपत्यस्य मनोभवस्य
प्रतापबालार्क इवोज्जिहानः ॥ १२ ॥

व्या ॥ सिन्दूरेत्यादि । सिन्दूरक्लृप्तः—सिन्दूरेण नागजेन रचितः । विवाहदीक्षातिलकः—विवाहदीक्षाया विवाहव्रतारम्भस्य तिलकः विशेषकम्; 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । प्राप्ताधिपत्यस्य प्राप्तमाधिपत्यं येन तस्य । प्रतापबालार्कः—प्रताप एव बालसूर्यः । उज्जिहानः उद्गच्छन् ॥ १२ ॥

कर्णावसक्ताः कमलेक्षणाया
'यवाङ्कुराः सातिशयं विरेजुः ।
त्रिलोकजिष्णोः कुसुमायुधस्य
कीर्तिप्ररोहा इव जृम्भमाणाः ॥ १३ ॥

व्या ॥ कर्णेत्यादि । कर्णावसक्ताः कर्णविन्यस्ताः । यवाङ्कुराः—यवानां धान्यविशेषाणां प्ररोहाः । सातिशयं सविशेषं यथा तथा । त्रिलोकजिष्णोः लोकत्रयविजयिनः । कीर्तिप्ररोहाः कीर्त्यङ्कुरा इवेत्युत्प्रेक्षा । जृम्भमाणाः वर्धमानाः ॥ १३ ॥

कस्तूरिकाकल्पितपत्रलेख-
स्तस्याः कपोलः शशिमण्डलश्रीः ।
आक्रम्य तस्थौ मुकुरस्य शोभा-
मम्भोदवातैर्मलिनोदरस्य ॥ १४ ॥

व्या ॥ कस्तूरिकेत्यादि । कस्तूरिकाकल्पितपत्रलेखः—कस्तूरिकया मृगमदेन, 'मृगनाभिर्मृगमदः कस्तूरी च' इत्यमरः, कल्पिता रचिता पत्रलेखा पत्रावलिः यस्य सः । शशिमण्डलश्रीः—शशिनश्चन्द्रस्य

---

' यावाङ्कुराः. T.

मण्डलस्य बिम्बस्य श्रीरिव श्रीर्यस्य सः । आक्रम्य अतिक्रम्य । मुकुरस्य दर्पणस्य, 'दर्पणो मुकुरादर्शौ' इत्यमरः । अम्भोदवातैः मेघवातैः । मलिनोदरस्य—मलिनम् उदरं यस्य तस्य ॥ १४ ॥

विन्यस्तकालाञ्जनदर्शनीयं
विलोचनं मीनविलोचनायाः ।
अत्युग्रहालाहलपङ्कदिग्धा-
मनङ्गबाणश्रियमन्वयासीत् ॥ १५ ॥

व्या ॥ विन्यस्तेत्यादि । विन्यस्तकालाञ्जनदर्शनीयम्—विन्यस्तेन विक्षिप्तेन कालेन नीलेन, 'कालश्यामलमेचकाः' इत्यमरः, अञ्जनेन दर्शनीयम् । अत्युग्रहालाहलपङ्कदिग्धाम्—अत्युग्रेण तीव्रतरेण हालाहल-पङ्केन कालकूटकर्दमेन दिग्धां लिप्ताम् । अनङ्गबाणश्रियं मन्मथबाण-शोभाम् । अन्वयासीत् अन्वकरोत् ॥ १५ ॥

अनन्यसाधारणपाटलिम्न
स्तस्या मनोज्ञस्य रदच्छदस्य ।
आकल्पिता यावकपङ्कभूति-
रभूतपूर्वा न चकार शोभाम् ॥ १६ ॥

व्या ॥ अनन्येत्यादि । अनन्यसाधारणपाटलिम्नः—अनन्यसाधारणः अन्यदुर्लभः पाटलिमा रक्तिमा यस्य तस्य । रदच्छदस्य अधरोष्ठस्य, 'ओष्ठोऽधरो रदच्छदः' इति हेमचन्द्र । यावकपङ्कभूतिः—यावकपङ्कस्य लाक्षाकर्दमस्य, 'यावोऽलक्तो द्रुमामयः' इत्यमरः, भूतिः । अभूतपूर्वा नूतनाम् ॥ १६ ॥

अलंकृतं मौक्तिककुण्डलाभ्या-
मम्भोरुहाक्ष्या मुखमार्द्रहासम् ।

पार्श्वद्वयावस्थितपुण्डरीक-
कोशं शरत्कोकनदं जिगाय ॥ १७ ॥

व्या ॥ अलंकृतामिति । मौक्तिककुण्डलाभ्यां मुक्तामयकर्णभूषणाभ्याम् । आर्द्रहासं सस्मितम् । पार्श्वद्वयावस्थितपुण्डरीककोशम्—पार्श्वद्वये उभयपार्श्वे अवस्थितौ पुण्डरीककोशौ सिताम्भोजमुकुलौ यस्य तत्; 'पुण्डरीकं सिताम्भोजम्, 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमरः । शरत्कोकनदं शारदरक्तोत्पलम्; 'रक्तोत्पलं कोकनदम्' इत्यमरः । जिगाय अजयत् ॥ १७ ॥

आमुक्तमुक्तासरदर्शनीय-
माबिभ्रती कण्ठमतीव रेजे ।
निष्ठ्यूतमुक्तानिकराभिराम-
शङ्खोज्ज्वला सागरवीचिकेव ॥ १८ ॥

व्या ॥ आमुक्तेत्यादि । आमुक्तमुक्तासरदर्शनीयम्—आमुक्तेन धृतेन मुक्तासरेण मौक्तिकहारेण दर्शनीयं मनोज्ञम् । निष्ठ्यूतमुक्तानिकराभिरामशङ्खोज्ज्वला—निष्ठ्यूतैः उद्गीर्णैः मुक्तानिकरैः मौक्तिकसमूहैः अभिरामेण शङ्खेन उज्ज्वला दीप्ता ॥ १८ ॥

तस्या वपुश्चन्दनपङ्कलिप्त-
मामोदिकालागरुभक्तिचित्रम् ।
कलिन्दजाकर्बुरितान्तरायाः
शोभामपुष्यत्सुरशैवलिन्याः ॥ १९ ॥

व्या ॥ तस्या इति । आमोदिकालागरुभक्तिचित्रम्—आमोदिन्या सुरभिण्या कालागरोः भक्त्या भङ्गेन चित्रं नानावर्णम् । कलिन्दजा-

कर्बुरितान्तरायाः—कलिन्दजया यमुनया कर्बुरितं चित्रितम् अन्तरं यस्यास्तस्याः । सुरशैवलिन्याः गङ्गायाः । अपुष्यत् पुपोष ॥ १९ ॥

पयोधरद्वन्द्वमनिन्दिताङ्ग्याः
परिस्फुरन्निस्तलतारहारम्[1] ।
आकीर्णतारानिकराभिरा[2]मा-
मस्ताद्रिशृङ्गश्रियमन्वगच्छत् ॥ २० ॥

व्या ॥ पयोधरेत्यादि । पयोधरद्वन्द्वम्—पयोधरयोः स्तनयोर्द्वन्द्वं युगलम्; 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । अनिन्दिताङ्ग्याः अनवद्यावयवायाः । परिस्फुरन्निस्तलतारहारम्—परिस्फुरन् प्रकाशमानः निस्तलानां वर्तुलानां ताराणां शुद्धमुक्तामणीनां हारः यस्मिंस्तत्; 'वर्तुलं निस्तलं वृत्तम्', 'तारस्तु मुक्ताशुद्धौ सुमौक्तिके' इत्युभयत्र वैजयन्ती। आकीर्णतारानिकराभिरामाम्—आकीर्णैः ताराणा नक्षत्राणाम्, 'नक्षत्रमृक्षं भं तारा' इत्यमरः, निकरैः समूहैः अभिरामाम्। अस्ताद्रिशृङ्गश्रियम्—अस्ताद्रेः अस्तमयपर्वतस्य शृङ्गस्य शिखरस्य श्रियं शोभाम् ॥ २० ॥

वलित्रयालंकृतमध्यदेशा
तन्वी विलोलस्तनभारहारा ।
तरङ्गिता शीकरजालिताङ्ग-
चक्राह्वया शैवलिनीव रेजे ॥ २१ ॥

व्या ॥ वलित्रयेत्यादि । वलित्रयालंकृतमध्यदेशा—वलित्रयेण त्रिवल्या अलंकृतो मध्यदेशो यस्याः सा । विलोलस्तनभारहारा—

[1] निस्तुल. T. [2] राम. C.M.

विलोलः चञ्चलः स्तनभारे स्थितः हारः यस्याः सा । तरङ्गिता संजाततरङ्गा । शीकरजालिताङ्गचक्राह्वया—शीकरजालितानि संजातशीकरजालानि अङ्गानि येषां तादृशाः चक्राह्वयाः चक्रवाकपक्षिणः यस्याः सा । शैवलिनी नदी; 'तरङ्गिणी शैवलिनी' इत्यमरः ॥ २१ ॥

माणिक्यकाञ्चीवलयानुविद्ध-
श्रोणीभरा क्षोणिपतेस्तनूजा ।
वसुंधरा वारिधिरत्नगर्भ-
वेलासमालिङ्गितसैकतेव ॥ २२ ॥

व्या ॥ माणिक्येत्यादि । माणिक्यकाञ्चीवलयानुविद्धश्रोणीभरा—माणिक्यकाञ्चीवलयेन रत्नमेखलामण्डलेनानुविद्धः व्याप्तः श्रोणिभरः कटिप्रदेशो यस्याः सा; 'स्त्रीकट्यां मेखला काञ्ची', 'कटिः श्रोणिः ककुद्मती' इत्युभयत्रामरः । वारिधिरत्नगर्भवेलासमालिङ्गितसैकता—वारिधेः समुद्रस्य रत्नानि गर्भे यस्यास्तया वेलया जलसमृद्ध्या समालिङ्गितं संश्लिष्टं सैकतं पुलिनं यस्याः सा; 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः ॥ २२ ॥

रराज तस्या नवरोमराजि-
रारोहतस्तुङ्गपयोधराद्रिम् ।
शृङ्गारयोनेरवलम्बनार्थ-
मालम्बितेन्दीवरमालिकेव ॥ २३ ॥

व्या ॥ रराजेति । नवरोमराजिः नूतनरोमलेखा । तुङ्गपयोधराद्रिम् उन्नतस्तनगिरिम् । शृङ्गारयोनेः मदनस्य; 'शृङ्गारयोनिः श्रीपुत्रः' इत्यमरः । अवलम्बनार्थम् आलम्बनाय । आलम्बिता अधोमुखं क्षिप्ता । इन्दीवरमालिका नीलोत्पलमालेव ॥ २३ ॥

अनर्घचामीकरकल्पिताभि-
रलंक्रियाभिः सुतनुश्चकाशे ।
समुज्ज्वला नूतनमञ्जरीभिः
संचारिणी चम्पकवल्लरीव ॥ २४ ॥

व्या ॥ अनर्घेत्यादि । अनर्घचामीकरकल्पिताभिः अनर्घेणामूल्येन चामीकरेण सुवर्णेन कल्पिताभिर्निर्मिताभिः ; 'मूल्ये पूजाविधावर्घः' 'चामीकरं जातरूपम्' इत्युभयत्रामर । अलंक्रियाभिः भूषणैः । नूतनमञ्जरीभिः नवपुष्पस्तबकैः । संचारिणी जङ्गमा । चम्पकवल्लरी चम्पकलता ॥ २४ ॥

अलक्तकासङ्गविवृद्धराग
मङ्घ्रिद्वयं कोमलमायताक्ष्याः ।
नवातपस्पर्शविशेषदृश्यां
नालीकशोभां नमयांचकार ॥ २५ ॥

व्या ॥ अलक्तकेत्यादि । अलक्तकासङ्गविवृद्धरागम्—अलक्तकस्य लाक्षारसस्य आसङ्गेन संबन्धेन विवृद्धरागम् अतिपाटलम् । नवातपस्पर्शविशेषदृश्याम्—नवातपस्य बालातपस्य स्पर्शेन विशेषदृश्याम् अतिमनोहराम् । नालीकशोभां पद्मशोभाम् । नमयांचकार नीचैश्चकार ॥ २५ ॥

आकल्पसौन्दर्यदिदृक्षये[1]य-
माबिभ्रती स्फाटिकमात्मदर्शम् ।
विदिद्युते पूर्णशशाङ्कबिम्ब-
संपर्किणी शातमखी दिशेव ॥ २६ ॥

---

[1] यैव. T.C.P.V.

व्या ॥ आकल्पेत्यादि । आकल्पसौन्दर्यदिदृक्षया—आकल्पस्य मण्डनस्य, 'स्यादाकल्पस्तु मण्डने' इति हेमचन्द्रः, सौन्दर्यस्य लावण्यस्य दिदृक्षया द्रष्टुमिच्छया । स्फाटिकं स्फटिकमयम् । आत्मदृशम्—आत्मानं दर्शयतीति तादृशम्, निजरूपदर्शकं दर्पणम् । विदिद्युते प्रचकाशे । पूर्णशशाङ्कबिम्बसंपर्किणी पूर्णचन्द्रमण्डलवती । शातमखी—शतमखस्य इयम्, इन्द्रसम्बन्धिनी । दिशा दिक्; 'दिक् तु स्त्रियां दिशा दान्ती ककुब्देववधूः पविः' इति शब्दार्णवः ॥ २६ ॥

अनन्तरं बन्धुरगात्रयष्टेः
पुरोधसः पूर्णमनोरथायाः ।
न केवलं कौतुकमाबबन्धुः
कराम्बुजे किंच हृदम्बुजेऽपि ॥ २७ ॥

व्या ॥ अनन्तरमिति । अनन्तरम् अलंकरणपरिसमाप्त्यनन्तरम् । बन्धुरगात्रयष्टेः—बन्धुरा मनोज्ञा, 'बन्धूरबन्धुरौ रम्ये' इति विश्वः, गात्रयष्टिस्तनुलता यस्यास्तस्याः । पुरोधसः पुरोहिताः; 'पुरोधास्तु पुरोहितः' इत्यमरः । पूर्णमनोरथायाः संतोषाधिक्यात्परिपूर्णचित्तायाः। कौतुकं प्रतिसरसूत्रं कुतूहलं च; 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले' इति वैजयन्ती ॥ २७ ॥

एवं समापय्य कुमारिकाया
वैवाहिकं मण्डनसंविधानम् ।
कुतूहली कोलियभूमिपाल-
स्तस्थौ वरस्यागममीक्षमाणः ॥ २८ ॥

व्या ॥ एवमिति । समापय्य निर्वर्त्य । वैवाहिकं विवाहप्रयोजनकं विवाहनिमित्तकं वा । मण्डनसंविधानम् अलङ्कारयोजनम् । वरस्य जामातुः 'वरो ना रूपजामात्रोः' इति वैजयन्ती । ईक्षमाणः प्रतीक्षमाणः ॥ २८ ॥

अथ स्ववेश्मन्यधिराजसूनुः
स्नातानुलिप्तो नवधौतवासाः ।
उल्लासिकां लोकविलोचनाना-
मुद्वाहभूषामुररीचकार[1] ॥ २९ ॥

व्या ॥ अथेति । अथ पुनःसंदेशपत्रप्रेषणानन्तरम् । स्ववेश्मनि स्वगृहे; 'वेश्म सद्म निकेतनम्' इत्यमरः । स्नातानुलिप्तः—पूर्वं स्नातः पश्चादनुलिप्तः । नवधौतवासाः—नवं धौतं क्षालितं वासो वस्त्रं यस्य सः । उल्लासिकाम् आनन्दयित्रीम् । उद्वाहभूषाम् उद्वाहकालयोग्यमलंकरणम् । उररीचकार स्वीचकार ॥ २९ ॥

सुवर्णसूत्रग्रथितान्तरेण
क्षौमोत्तरीयेण स राजसूनुः ।
विद्युत्पिनद्धेन शरद्घनेन
वियत्तलाभोग इव व्यराजत् ॥ ३० ॥

व्या ॥ सुवर्णेत्यादि । सुवर्णसूत्रग्रथितान्तरेण—सुवर्णसूत्रैः हेममयैः सूत्रैः ग्रथितं स्यूतमन्तरं मध्यभागो यस्य तेन । क्षौमोत्तरीयेण दुकूलोत्तरीयवस्त्रेण । विद्युत्पिनद्धेन--विद्युता तटिता पिनद्धेन संयुक्तेन । शरद्घनेन शरत्कालमेघेन । वियत्तलाभोग इव आकाशप्रदेश इव । पिनद्धेनेत्यत्र 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अपेरकारस्य लोपः ॥ ३० ॥

विशालवक्षःस्थललम्बितेन
मुक्ताकलापेन बभौ कुमारः ।

---

[1] लीला. C.

विराजमानेन तटोपकण्ठे
छायापथेनेव सुवर्णशैलः ॥ ३१ ॥

व्या ॥ विशालेत्यादि । विशालवक्षःस्थललम्बितेन—विशाले विपुले वक्षःस्थले उरःप्रदेशे लम्बितेनामुक्तेन । मुक्ताकलापेन मौक्तिकभूषणेन; 'कलापो भूषणे बर्हे' इत्यमरः । तटोपकण्ठे—तटस्य सानोः उपकण्ठे समीपे । छायापथेन ज्योतिश्चक्रमध्यवर्तिदक्षिणोत्तरायतगगनावकाशविशेषेण । सुवर्णशैलः मेरुः ॥ ३१ ॥

प्रसन्नगम्भीरवपुः कुमारः
प्रवालमुक्ताम[1]यकुण्डलाभ्याम् ।
चण्डांशुताराधिपमण्डलाभ्या-
मलंकृतो मेरुरिवालुलोके ॥ ३२ ॥

व्या ॥ प्रसन्नेत्यादि । प्रसन्नगम्भीरवपुः—प्रसन्नं निर्मलं गम्भीरम् अप्रधृष्यं वपुः यस्य सः । प्रवालमुक्तामयकुण्डलाभ्याम् विद्रुममौक्तिकप्रचुरकुण्डलाभ्याम् । चण्डांशुताराधिपमण्डलाभ्यां सूर्यचन्द्रमण्डलाभ्याम् । आलुलोके ददृशे ॥ ३२ ॥

वरश्चकाशे हरिचन्दनार्द्रो
बालातपाताम्र इवोदयाद्रिः ।
धा[2]तुच्छटाविच्छुरितः करीव
संध्यामहःसान्द्र इवामृतांशुः ॥ ३३ ॥

व्या ॥ वर इति । हरिचन्दनार्द्रः रक्तचन्दनानुलिप्तः । बालातपाताम्रः—बालातपेन बालसूर्यप्रभया आताम्रः रक्तः । धातुच्छटावि-

---

[1] फल. M. [2] बाल. V.

च्छुरितः—धातुच्छटया गैरिकादिधातुपुञ्जेन विच्छुरितः रूषितः। संध्यामहःसान्द्रः संध्याकालतेजोव्याप्तः ॥ ३३ ॥

आदर्शबिम्बे प्रतिमाशरीर-
मामुक्तरत्नाभरणस्य यूनः ।
वैकर्तनं मण्डलमास्थितस्य
पुंसः पुराणस्य पुपोष लक्ष्मीम् ॥ ३४ ॥

व्या ॥ आदर्शेत्यादि । आदर्शबिम्बे दर्पणे । प्रतिमाशरीरं प्रतिफलितं शरीरम् । आमुक्तरत्नाभरणस्य धृतरत्नभूषणस्य । यूनः तरुणस्य । वैकर्तनम् विकर्तनस्य सूर्यस्य इदम् । पुंसः पुराणस्य सनातनस्य पुरुषस्य विष्णोः; विष्णुरिव बभासे इत्यर्थः ॥ ३४ ॥

अलंक्रियाजायत देहकान्ति-
नैसर्गिकी तस्य नरेन्द्रसूनोः ।
ऐश्वर्यचिह्नानि परं बभूवु-
रन्यानि माणिक्यविभूषणानि ॥ ३५ ॥

व्या ॥ अलंक्रियेति । अलंक्रिया अलंकरणम् । नैसर्गिकी स्वाभाविकी । ऐश्वर्यचिह्नानि समृद्धिलक्षणानि । स्वभावसुन्दरस्य कुमारस्य भूषणजालं न शोभायै; किंतु समृद्धिसूचनायेति भावः ॥ ३५ ॥

उत्क्षिप्तमुक्तातपवारणश्री-
रुद्धूतवालव्यजनोपचारः ।
आरुह्य वै[1]वाहिकमौपवाह्यं
जगाम संबन्धिगृहं कुमारः ॥ ३६ ॥

---

[1] वैहारिक.

व्या ॥ उत्क्षिप्तेत्यादि। उत्क्षिप्तमुक्तातपवारणश्रीः—उत्क्षिप्तस्योर्ध्वं धृतस्य मुक्तातपवारणस्य मौक्तिकमयच्छत्रस्य श्रीः यस्य सः। उद्धूत वालव्यजनोपचारः—उद्धूते उच्चालिते वालव्यजने चामरे एव उपचारो यस्य सः। वैवाहिकं विवाहे साधु। औपवाह्यं राजार्हगजादियानम्; 'औपवाह्यो राजवाह्यः' इति वैजयन्ती। संबन्धिगृहम्; श्वशुरगृह-मित्यर्थः ॥ ३६ ॥

तमागतं शाक्यकुलप्रदीपं
क्षोणीपतिः कोलियचक्रवर्ती।
स्वयं पदाभ्यामभिगम्य दूरं
वैवाहिकं मण्डपमानिनाय ॥ ३७ ॥

व्या ॥ तामिति। शाक्यकुलप्रदीपं शाक्यवंशप्रकाशकम्। अभिगम्य प्रत्युद्गम्य ॥ ३७ ॥

ददर्श धीरः क्षितिपालपुत्रीं
तत्र स्थितां तारकराजव[1]क्त्राम्।
लीलारविन्देन करस्थितेन
पयोधिकन्यामिव भासमानाम् ॥ ३८ ॥

व्या ॥ ददर्शेति। तत्र विवाहमण्डपे। तारकराजवक्त्रां चन्द्र-मुखीम्। लीलारविन्देन लीलार्थं धृतेन पङ्कजेन। पयोधिकन्यां लक्ष्मीम् ॥ ३८ ॥

सोत्कण्ठमालोकयतः कुमारीं
सुधांशुशोभापरिभावुकाङ्गीम्।
अतीत्य वेलामधिराजसूनो-
रानन्दसिन्धुः प्रससार दूरम् ॥ ३९ ॥

---

[1] वक्त्रीम्. C.P.V.

व्या ॥ सोत्कण्ठमिति । सोत्कण्ठम् औत्सुक्यसहितं यथा तथा । सुधांशुशोभापरिभावुकाङ्गीम्—सुधांशोः चन्द्रस्य शोभायाः परिभावुकानि तिरस्करणशीलानि अङ्गानि यस्यास्ताम् । अतीत्य अतिक्रम्य । वेलां कूलम् ॥ ३९ ॥

यत्कार्यते तत्र पतिव्रताभिः
कृत्वा तदेतत्सकलं कुमारः ।
तया समं तामरसायताक्ष्या
जगाम वैतानिकवेदिमध्यम् ॥ ४० ॥

व्या ॥ यदिति । कार्यते कर्तुं प्रेर्यते । पतिव्रताभिः सतीभिः प्रयोजककर्त्रीभिः । वैतानिकवेदिमध्यम्—वितानं प्रयोजनमस्य इति वैतानिकी या वेदिः परिष्कृतभूमिः, 'वेदिः परिष्कृता भूमिः' इत्यमरः, तस्या मध्यम् ॥ ४० ॥

उदर्चिषस्तस्य हुताशनस्य
हविर्भिरुच्चैर्ज्वलतः पुरस्तात् ।
क्रियाकलापे कृतधीः पुरोधाः
संयोजयामास वधूकुमारौ ॥ ४१ ॥

व्या ॥ उदर्चिष इति । उदर्चिषः—उद्गतानि अर्चींषि यस्य तस्य । हुताशनस्य अग्नेः । क्रियाकलापे क्रियासमूहे । कृतधीः निश्चितबुद्धिः । पुरोधाः पुरोहितः । संयोजयामास, विवाहविधिना पाणिग्रहं कारयामासेत्यर्थः ॥ ४१ ॥

आसत्कुमारः पुलकप्ररोहै-
रुदञ्चितैः कञ्चुकिताङ्गयष्टिः ।

वैकक्षमाल्यच्युतकेसरास्त-
द्गुप्त्यै बभूवुर्गुणरत्नराशेः ॥ ४२ ॥

व्या ॥ आसीदिति । पुलकप्ररोहैः रोमाञ्चाङ्कुरैः ; 'पुलके गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे' इति हेमचन्द्रः'। उदञ्चितैः उद्गतैः । कञ्चुकिताङ्गयष्टिः—कञ्चुकिता संजातकञ्चुका, आवृतेति यावत्, अङ्गयष्टिः यस्य सः । वैकक्षमाल्यच्युतकेसराः—वैकक्षमाल्यात् कण्ठादुरसि उपवीतवत्तिर्यक्क्षिप्तमाल्यात्, 'कण्ठाद्वैकक्षकं तु तत्। यत्तिर्यक्क्षिप्तमुरसि' इत्यमरः, च्युताः पतिताः केसराः किञ्जल्काः, 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः। तद्गुप्त्यै रोमाञ्चाच्छादनाय। गुणरत्नराशेः—गुणाः रत्नानीव तेषां राशेः ॥ ४२ ॥

आविर्भवद्भिः श्रमवारिलेशै-
रार्द्राङ्गुलिः कोलियकन्यकासीत् ।
विवाहधाराजलशीकरास्त-
द्व्याजीबभूवुर्विपुलेक्षणायाः ॥ ४३ ॥

व्या ॥ आविर्भवद्भिरिति । आविर्भवद्भिः उत्पद्यमानैः । श्रमवारिलेशैः स्वेदजलकणैः ; 'लवलेशकणाणवः' इत्यमरः । आर्द्राङ्गुलिः सिक्ताङ्गुलिः । विवाहधाराजलशीकराः—विवाहे धाराजलस्य शीकराः बिन्दवः ; 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । तद्व्याजीबभूवुः—तस्मिन् स्वेदार्द्रभावे व्याजीबभूवुः अपलापसाधनानि बभूवुः । श्लोकद्वयोक्ताभ्यां दम्पत्योः रोमाञ्चस्वेदाभ्यां परस्परं निरतिशयानुरागः सूचितः ॥ ४३ ॥

आलोकलोभादभिवर्तमाना
निवर्तमानास्त्रपया च शश्वत् ।
तयोरपाङ्गप्रसरास्तदानीं
डोलाविहारश्रियमन्वभूवन् ॥ ४४ ॥

व्या ॥ आलोकेत्यादि । आलोकलोभात् दर्शनौत्सुक्येन । अभिवर्तमानाः अभ्युद्गच्छन्तः । त्रपया लज्जया । शश्वत् मुहुः । अपाङ्गप्रसराः कटाक्षव्याप्तयः । डोलाविहारश्रियम्—डोलाविहारस्य प्रेङ्खोलिकाक्रीडायाः, 'डोला प्रेङ्खोलिका स्त्रियाम्' इत्यमरः, श्रियं गमनागमनरूपां शोभाम ॥ ४४ ॥

अभ्यस्तया संवरणाम्बुराशे-
रावर्तचक्रभ्रमलीलयेव ।
वरः समं वामदृशा कृशानोः
प्रदक्षिणप्रक्रममन्वतिष्ठत् ॥ ४५ ॥

व्या ॥ अभ्यस्तयेति । अभ्यस्तया पुनः पुनः प्रवृत्तया । संवरणाम्बुराशेः—संव्रियते वरः अस्मिन्निति संवरणो विवाहः स एवाम्बुराशिः समुद्रः तस्य । आवर्तचक्रभ्रमलीलया—आवर्ते अम्भसां भ्रम यः चक्रभ्रमः चक्राकारभ्रमणं तस्य लीलया क्रीडयेवेति हेतूत्प्रेक्षा । वामदृशा सुन्दर्या । प्रदक्षिणप्रक्रमं प्रदक्षिणगतिम् ॥ ४५ ॥

कन्याकुमारौ कमनीयरूपा-
वालोक्य होमाग्निरदृष्टपूर्वौ ।
प्रदक्षिणार्चिःस्फुरणच्छलेन
श्लाघाशिरःकम्पमिवाचचार ॥ ४६ ॥

व्या ॥ कन्येत्यादि । कमनीयरूपौ रमणीयाकारौ । अदृष्टपूर्वौ पूर्वमदृष्टौ; असाधारणावित्यर्थः । प्रदक्षिणार्चिःस्फुरणच्छलेन—प्रदक्षिणं यथा तथा अर्चिषां ज्वालानां स्फुरणस्य प्रकाशनस्य छलेन व्याजेन । श्लाघाशिरःकम्पम्—श्लाघायै अभिनन्दनाय शिरःकम्पं शिरश्चालनम् । आचचार अकरोत् ॥ ४६ ॥

गुरुप्रयुक्ता कुलपालिका सा
लाजोपहारं विससर्ज वह्नौ ।
मरुद्विधूता लतिकेव पुष्पं
चूतद्रुमे [1]स्यूतनवप्रवाले ॥ ४७ ॥

व्या ॥ गुरुप्रयुक्तेति । गुरुप्रयुक्ता पुरोधःप्रेरिता । कुलपालिका कुलाङ्गना । लाजोपहारं लाजोपायनम् ; 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । मरुद्विधूता वायुकम्पिता । चूतद्रुमे आम्रवृक्षे । स्यूतनवप्रवाले—स्यूताः ग्रथिताः, आबद्धा इति यावत्, नवप्रवाला येन तस्मिन् ॥ ४७ ॥

समुद्गता धूमततिः कृशानोः
समीपलग्ना मुखसारसस्य ।
[2]अम्लाननीलायतनालभङ्गी-
मङ्गीचकाराम्बुजलोचनायाः ॥ ४८ ॥

व्या ॥ समुद्गतेति । धूमततिः धूमराजिः । समीपलग्ना संनिहिता । मुखसारसस्य मुखाम्बुजस्य ; 'सारसं सरसीरुहम्' इत्यमरः । अम्लाननीलायतनालभङ्गीम्— अम्लानः नव्यः नीलः आयतः दीर्घो यो नालः तस्य भङ्गीं रीतिम् ॥ ४८ ॥

तस्मादुदीर्णा नवधूमराजि-
स्तस्या मुखे तद्ग्रहणप्रसन्ने ।
क्षणं समालक्ष्यत संचरन्ती
सरोरुहे षट्पदमालिकेव ॥ ४९ ॥

---

[1] स्रुत. C.P.T.   [2] अमान. P.

व्या ॥ तस्मादिति । तस्मात् होमाग्नेः । तद्ग्रहणप्रसन्ने—तस्य वरस्य ग्रहणेन पाणिग्रहणेन प्रसन्ने निर्मले ; विकसित इत्यर्थः । षट्पदमालिका भ्रमरमाला ; 'षट्पदभ्रमरालयः' इत्यमरः ॥ ४९ ॥

वक्त्रारविन्दं परितः प्रकीर्णा
वामभ्रुवो मङ्गलधूमराजिः ।
अन्यामृतांशुभ्रमतः प्रयाता-
मधत्त साक्षात्परिवेषलक्ष्मीम् ॥ ५० ॥

व्या ॥ वक्त्रेत्यादि । वक्त्रारविन्दं परितः वक्त्रारविन्दस्य समन्तात् ; परितःशब्दयोगे षष्ठ्यर्थे द्वितीया । प्रकीर्णा व्याप्ता । वामभ्रुवः—वामे सुन्दरे भ्रुवौ यस्यास्तस्याः । अन्यामृतांशुभ्रमतः चन्द्रान्तरभ्रमेण । परिवेषलक्ष्मीं परिधिश्रियम् ; 'परिवेषस्तु परिधिः' इत्यमरः ॥ ५० ॥

वक्त्राम्बुजं वामदृशः परीता
वैवाहिकी मङ्गलधूमपाङ्क्तिः[1] ।
बभार नीलांशुकनिर्मितस्य
मुहूर्तवक्त्रावरणस्य शोभाम् ॥ ५१ ॥

व्या ॥ वक्त्रेत्यादि । परीता व्याप्ता । वैवाहिकी विवाहनिमित्ता । नीलांशुकनिर्मितस्य—नीलांशुकेन नीलवस्त्रेण निर्मितस्य । मुहूर्तवक्त्रावरणस्य—विवाहमुहूर्तकाले वक्त्रावरणस्य अवगुण्ठनस्य ॥ ५१ ॥

काला[2]ञ्जनोच्छ्वासविकूणिताक्षं
घर्मोदकक्लिष्टकपोलपत्रम् ।

---

[1] भक्तिः T.

[2] म्बुदो C.

[1]विवर्णकर्णोत्पलमाननाब्जं
बभूव धूमग्रहणान्मृगाक्ष्याः ॥ ९२ ॥

व्या ॥ कालेत्यादि । कालाञ्जनोच्छ्वासविकूणिताक्षम्—कालाञ्जनस्य नीलाञ्जनस्य उच्छ्वासेन व्यापनेन विकूणिते मीलिते अक्षिणी यस्य तत् । घर्मोदकाश्लिष्टकपोलपत्रम्—घर्मोदकेन स्वेदजलेन श्लिष्टं म्लानं कपोलपत्रं गण्डपत्रं यस्य तत् । विवर्णकर्णोत्पलम्—विवर्णे विकृते कर्णोत्पले यस्य तत् । धूमग्रहणात् धूमव्यापनात् ॥ ९२ ॥

इति क्रमेणाहितपाणि[2]पीड-
स्तया सहैव श्वशुरौ कुमारः ।
ननाम तावप्यनुमोदमाना-
वाशीर्भिरेनावनुवर्धयेताम् ॥ ९३ ॥

व्या ॥ इतीति । आहितपाणिपीडः—आहिता कृता पाणिपीडा पाणिग्रहणं येन सः । श्वशुरौ श्वश्रूः श्वशुरः च । तावपि श्वश्रूश्वशुरावपि । एतौ वधूवरौ । अनुवर्धयेताम्, समवर्धयेताम् इति लङन्तं न्याय्यम् ॥९३॥

अन्यांश्च सर्वानपि बन्धुवर्गान्
संभाव्य जायासहितः कुमारः ।
निर्गत्य तस्मान्निजराजधानी-
प्रदक्षिणाय प्रवरो जगाम ॥ ९४ ॥

व्या ॥ अन्यानिति । संभाव्य सत्कृत्य । तस्मात् कोलियनगरात् । निजराजधानीप्रदक्षिणाय—निजराजधान्याः कापिलायाः प्रदक्षिणीकरणाय ॥ ९४ ॥

---

[1] विकीर्ण. V. [2] पाद. F

तस्मिन् मुहूर्ते कपिलाङ्गनानां
कुमारनिध्यानपरायणानाम् ।
सौधेषु सौधेषु समुद्बभूवुः
शृङ्गारचेष्टा मदनोपदिष्टाः ॥ ९५ ॥

व्या ॥ तस्मिन्निति । कुमारनिध्यानपरायणानाम्—कुमारस्य निध्याने दर्शने, 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः, आसक्तानाम् । शृङ्गारचेष्टाः शृङ्गाररसानुभावाः । मदनोपदिष्टाः ; कामजनिता इत्यर्थः ॥ ९५ ॥

सप्तभिः पद्यैः कपिलास्त्रीणां कुमारदर्शनौत्सुक्यं वर्णयति—

तथाहि काचित्करपल्लवेन
कल्हारमालामवलम्बमाना ।
स्वयं वरीतुं किल [1]राजधानी-
सोपानमार्गं त्वरया जगाम ॥ ९६ ॥

व्या ॥ तथाहीति । कल्हारमालां सौगन्धिकपुष्पमालाम् ; 'सौगन्धिकं तु कल्हारम्' इत्यमरः । किल इवेत्युत्प्रेक्षा । राजधानीसोपानमार्गम्—राजधान्याः आरोहणमार्गम् ; 'आरोहणं स्यात् सोपानम्' इत्यमरः ॥ ९६ ॥

नेत्रस्य तद्दर्शननिश्चलस्य
मा भूदिदं रोध इतीव मत्वा ।
अपास्य कालाञ्जनमायताक्षी
वातायनं सत्वरमाप काचित् ॥ ९७ ॥

---

[1]राजधानीं· P

व्या ॥ नेत्रस्येति । तद्दर्शननिश्चलस्य—तस्य कुमारस्य दर्शने निश्चलस्य स्तब्धस्य । रोधः प्रतिबन्धः । कालाञ्जनं कज्जलम् । वातायनं गवाक्षम्; 'वातायनं गवाक्षोऽथ' इत्यमरः सत्वरमित्यत्र त्वरया औत्सुक्याधिक्यं सूचितम् ॥ ९७ ॥

विभूषणैरन्तरिते [1]मदङ्गे
नैसर्गिकीं कान्तिमसौ न पश्येत् ।
इतीव नैपथ्यमकल्पयन्ती
काचित्प्रपेदे सहसा गवाक्षम् ॥ ९८ ॥

व्या ॥ विभूषणैरिति । अन्तरिते छन्ने । नैपथ्यम् अलंकारम् । अकल्पयन्ती अकारयन्ती । सहसा प्रपेदे शीघ्रमेव गतवती ॥ ९८ ॥

व्याकोशमेतद्यदि कर्णपाशे
निवेशयेयं सुरभि द्विरेफः ।
मां पीडयेदित्यव[2]धीर्य मन्ये
कर्णोत्पलं कापि जगाम जालम् ॥ ९९ ॥

व्या ॥ व्याकोशमिति । व्याकोशं विकसितम्; 'व्याकोशविकचस्फुटाः' इत्यमरः । कर्णपाशे प्रशस्ते कर्णे । द्विरेफः भ्रमरः; 'द्विरेफपुष्पलिड्भृङ्ग' इत्यमरः । अवधीर्य निराकृत्य । जालं गवाक्षम्; जालं तु गवाक्षे क्षारके गणे' इति हेमचन्द्रः ॥ ९९ ॥

तदाननालोकनहर्षजातः
स्तनस्य रोमोद्गम एव भूषा ।
इतीव पत्रावलिमुत्सृजन्ती
वातायनाभ्यर्णमवाप काचित् ॥ ६० ॥

---

[1] ममाङ्गे T. P. V. [2] धार्य V.

व्या ॥ तदाननेत्यादि । तदाननालोकनहर्षजातः—तदाननस्य कुमारमुखस्य आलोकनेन वीक्षणेन जातो यो हर्षः तेन जातः। रोमोद्गमः रोमाञ्चः । इतीव इति मत्वेव । पत्रावलिं पत्रराजिम् ॥ ६० ॥

पतिव्रतायाः परदर्शनाय
यात्रा न युक्तेति निरुन्धतीव ।
नितम्बबिम्बाद्रशना गलन्ती
कस्याश्चिदङ्घ्रिं कलयांचकार ॥ ६१ ॥

व्या ॥ पतिव्रताया इति। पतिव्रतायाः सत्याः । परदर्शनाय परपुरुषवीक्षणाय। निरुन्धती प्रतिबध्नती । नितम्बबिम्बात् कटिदेशात् । रशना मेखला। गलन्ती च्युता । कलयांचकार आवव्रे ॥ ६१ ॥

एकावलीं काचिदनर्पयित्वा
कण्ठोपकण्ठे करपङ्कजेन ।
समुद्वहन्ती त्वरमाणचेता-
स्तस्योपहारार्थमिव प्रतस्थे ॥ ६२ ॥

व्या ॥ एकावलीमिति । एकावलीम् एकयष्टिकहारम् ; 'एकावल्यनुकण्ठी च हारः स्यादेकयष्टिकः' इति वैजयन्ती । अनर्पयित्वा अधृत्वा । कण्ठोपकण्ठे कण्ठसमीपे । त्वरमाणचेताः—त्वरमाणं परिभ्रान्तं चेतः यस्याः सा । उपहारार्थम् उपायनार्थम् ॥ ६२ ॥

ताभिस्तदुद्वीक्षणतत्पराभि-
र्निरन्तराः सौधतलप्रदेशाः ।
जगज्जिगीषोर्मकरध्वजस्य
सेनानिवेशप्रतिमा बभूवुः ॥ ६३ ॥

व्या ॥ ताभिरिति । तदुद्वीक्षणतत्पराभिः—तस्य कुमारस्य उद्वीक्षणे दर्शने तत्पराभिः आसक्ताभिः । निरन्तराः निबिडाः । सौधतलप्रदेशाः सौधोपरिभागाः । सेनानिवेशप्रतिमाः—सेनानां निवेशेन व्यूहरचनाविन्यासेन सदृशाः ॥ ६३ ॥

वीथीषु वीथीषु विलासिनीनां
तस्मिन्निपेतुस्तरलाः कटाक्षाः ।
प्रासादजालान्तरिताङ्गयष्टेः
प्रसूनकेतोरिव पुष्पबाणाः ॥ ६४ ॥

व्या ॥ वीथीष्विति । प्रासादजालान्तरिताङ्गयष्टेः—प्रासादजालैः सौधगतगवाक्षैः अन्तरिता आच्छादिता अङ्गयष्टिः यस्य तस्य । प्रसूनकेतोः पुष्पकेतनस्य मदनस्य । पुष्पबाणाः पुष्पमया बाणाः ॥ ६४ ॥

तमायताक्ष्यः स्पृहणीयमङ्गा-
दङ्गान्तरं गन्तुमशक्नुवानैः ।
आकर्णपूरप्रसृतैरपाङ्गै-
रालोकयामासुरतृप्तिभाजः ॥ ६५ ॥

व्या ॥ तमिति । स्पृहणीयं कमनीयम् । आकर्णपूरप्रसृतैः—आकर्णपूरं कर्णालंकारपर्यन्तं प्रसृतैः व्याप्तैः । अतृप्तिभाजः तृप्तिमभजन्त्यः ॥ ६५ ॥

तासां कुमारः शतपत्रमित्रै-
र्विलोचनैर्विस्मयनिर्निमेषैः ।
अङ्गेषु सर्वत्र निषक्तबिम्बैः
साक्षात् सहस्राक्ष इवावभासे ॥ ६६ ॥

व्या ॥ तासामिति । शतपत्रमित्रैः—शतपत्रस्य कुशेशयस्य. 'शतपत्रं कुशेशयम्' इत्यमरः, मित्रैः सुहृद्भिः ; सदृशैरित्यर्थः । विस्मयनिर्निमेषैः—विस्मयेन आश्चर्येण निर्निमेषैः अनिमेषैः । अङ्गेषु कुमारावयवेषु । निषक्तबिम्बैः – निषक्तानि बिम्बानि येषां तैः, प्रतिफलितैरित्यर्थः । सहस्राक्ष इन्द्रः ; 'आखण्डलः सहस्राक्षः' इत्यमरः ॥ ६६ ॥

यत्रैव यत्रैव कुमारगात्रे
व्यापारितं लोचनमङ्गनाभिः ।
तत्रैव तत्रैव बभूव कान्ति-
निर्यासनिःस्यूतमिवानुषक्तम् ॥ ६७ ॥

व्या ॥ यत्रैवेति । यत्रैव यत्रैव यस्मिन् यस्मिन् भागे । व्यापारितं न्यस्तम् । कान्तिनिर्यासनिःस्यूतम्—कान्त्यैव निर्यासेन वृक्षक्षीरेण निःस्यूतं सम्यक् बद्धमिवेत्युत्प्रेक्षा ॥ ६७ ॥

तासां कुमाराकृतिरातुराणा-
मस्पन्दविस्फारितलोचनानाम् ।
विनेतुकामेव मनोभवार्तिं
प्रत्येकमन्तर्हृदयं विवेश ॥ ६८ ॥

व्या ॥ तासामिति । अस्पन्दविस्फारितलोचनानाम्—अस्पन्दं निश्चलं यथा तथा विस्फारिते विस्तारिते लोचने यासां तासाम् । विनेतुकामा अपनेतुमिच्छुः । मनोभवार्तिं मदनपीडाम् ॥ ६८ ॥

काचित्तदा कण्टकिताङ्गयष्टि-
स्तदाननाम्भोरुहनिर्विशेषम् ।

आजिघ्रदानन्दनिमीलिताक्षी
करस्थितं विभ्रमपुण्डरीकम् ॥ ६९ ॥

व्या ॥ काचिदिति । तदा कुमारदर्शनकाले । **कण्टकिताङ्गयष्टिः**—कण्टकिता रोमाञ्चिता अङ्गयष्टिः वपुर्लता यस्याः सा । तदाननाम्भोरुहनिर्विशेषम्—तस्य कुमारस्य आननाम्भोरुहात् मुखपद्मात् निर्विशेषं विशेषशून्यम्; तत्सदृशमित्यर्थः । आनन्दनिमीलिताक्षी—आनन्देन निमीलिते अक्षिणी यस्याः सा ॥ ६९ ॥

काचित्तदाकर्षणसिद्धमन्त्रं
कामोपदिष्टं किल जप्तुकामा ।
करेण मन्दं भ्रमयांचकार
मुक्ताक्षमालामिव हारयष्टिम् ॥ ७० ॥

व्या ॥ काचिदिति । तदाकर्षणसिद्धमन्त्रम्—तस्य कुमारस्य आकर्षणे वशीकरणे सिद्धं फलौपयिकं मन्त्रम् । किल इवेति संभावनायाम् । मुक्ताक्षमालाम्—मुक्तानामक्षमालां जपमालाम् । हारयष्टिं हारसरम् ॥ ७० ॥

शुकावचञ्चुपुटपाटलेन
नखेन काचिद्विलिलेख नव्यम् ।
पाणिस्थितं केतकगर्भपत्र-
मनङ्गसंदेशमिवास्य कर्तुम् ॥ ७१ ॥

व्या ॥ शुकेत्यादि । शुकावचञ्चुपुटपाटलेन—शुकस्य **कीरस्य**, 'कीरशुकौ समौ' इत्यमरः, अवचञ्चुपुटमिव त्रोटिपुटवत् **पाटलेन अरुणेन** । केतकगर्भपत्रम्—केतककुसुमस्य गर्भस्थं पत्रम् । **अनङ्गसंदेशं** मदनावस्थासूचकलेखम् ॥ ७१ ॥

आलेख्यलीलाफलकं स तूलि[1]-
मेकं दधाना करपल्लवेन ।
आत्मानमालिख्य वराय तस्मै
दातुं समुद्योगवतीव तस्थौ ॥ ७२ ॥

व्या ॥ आलेख्येत्यादि । आलेख्यलीलाफलकम्—आलेख्यलीलायै चित्रक्रीडायै फलकम् । सतूलिम्—तूल्या चित्रलेखोपकरणभूतया कूर्चिकया सहितम्, 'तूली शय्याकूर्चिकयोः' इति वैजयन्ती । समुद्योगवती प्रयत्नवती ॥ ७२ ॥

चेतोभुवः पुष्पशिलीमुखानां
परागवर्षैः पतताम जस्रम् ।
कस्याश्चिदासीत् कलुषीकृतेव
दृष्टिः समुद्यद्बहुलाश्रुपूरा ॥ ७३ ॥

व्या ॥ चेतोभुव इति । चेतोभुवः मदनस्य । पुष्पशिलीमुखानां पुष्पबाणानाम्; 'अलिबाणौ शिलीमुखौ' इत्यमरः । समुद्यद्बहुलाश्रुपूरा —समुद्यन् उद्गच्छन् बहुलः अश्रुपूरः बाष्पप्रवाहः यस्याः सा ॥ ७३ ।

उद्भिन्नरोमोद्गमलोभनीया
रराज कस्याश्चन गण्डपालिः ।
धृ[2]ताङ्कुरा चित्र(त्त)गृहप्रवेशे
मनोभुवो मङ्गलपालिकेव ॥ ७४ ॥

व्या ॥ उद्भिन्नेत्यादि । उद्भिन्नरोमोद्गमलोभनीया—उद्भिन्नेन उद्गतेन रोमोद्गमेन रोमाञ्चेन लोभनीया स्पृहणीया । गण्डपालिः

[1] तुली. C. [2] कृता. T.

गण्डभागः। चित्तगृहप्रवेशे—चित्तस्यैव गृहस्य प्रवेशे। मङ्गलपालिका अङ्कुरार्पणपात्रविशेषः ॥ ७४ ॥

आकर्णमाकृष्टशरासनस्य
कामस्य कादम्बकदम्बकानाम्।
पक्षानिलेनेव विधूयमाना
काचिच्चकम्पे स्खलदुत्तरीया ॥ ७५ ॥

व्या ॥ आकर्णमिति। आकर्णं कर्णपर्यन्तम्। आकृष्टशरासनस्य—आकृष्टं शरासनं धनुः येन तस्य। कादम्बकदम्बकानाम्—कादम्बानां बाणानाम्, 'कादम्बः कलहंसेष्वोः' इति हेमचन्द्रः, कदम्बकानां समूहानाम्, 'निकुरुम्बं कदम्बकम्' इत्यमरः। पक्षानिलेन बाणपक्षवायुना। स्खलदुत्तरीया—स्खलत् भ्रश्यत् उत्तरीयं यस्याः सा ॥७५॥

घर्मोदबिन्दुप्रकरैरुदीर्णैः
करम्बिता काचन राजते स्म।
कोदण्डवल्लीव दृढावकृष्टा
निष्ठ्यूतमुक्ताङ्कुरिता स्मरस्य ॥ ७६ ॥

व्या ॥ घर्मेत्यादि। घर्मोदबिन्दुप्रकरैः—उदकानां बिन्दवः उदबिन्दवः, 'मन्थौदनसक्तुबिन्दु—' इत्यादिना उदकशब्दस्योदादेशः, घर्मस्य उदबिन्दवः तेषां प्रकरैः समूहैः। उदीर्णैः उद्गतैः। कोदण्डवल्ली इक्षुरूपा धनुर्लता। निष्ठ्यूतमुक्ताङ्कुरिता—निष्ठ्यूताभिः दृढानिष्पीडनेन बहिर्निर्गताभिः मुक्ताभिः अङ्कुरिता आचिता ॥ ७६ ॥

मनःप्रतोलीं विशतः प्रकीर्णै-
र्मनोभुवः पादपरागजालैः।
काचिद्दृशं कर्बुरितामिवग्रहेव
विवर्णभावं प्रतिपद्यते स्म ॥ ७७ ॥

व्या ॥ मन इत्यादि । मनःप्रतोलीम्—मन एव प्रतोलीं रथगमनार्हवीथीम् ; ‘रथ्या प्रतोली विशिखा’ इत्यमरः । पादपरागजालैः चरणरजःसमूहैः। कर्बुरविग्रहा शबलितशरीरा ; ‘चित्रकिर्मीरकल्माषशबलैताश्च कर्बुरे’, ‘शरीरं वर्ष्म विग्रहः’ इत्युभयत्रामरः । विवर्णभावं वर्णमालिन्यम् । प्रतिपद्यते स्म प्रत्यपद्यत ; ‘लट् स्मे’ इति भूते लट् ॥ ७७ ॥

पञ्चभिः पद्यैः तं वीक्षमाणानां स्त्रीणां परस्परमालापानाह—

कुमारमेनं कुलशैलधुर्यं
भर्तारमाप्तुं परमाभिरूप्यम् ।
बिम्बाधरेयं जननान्तरेषु
किं वाकरोत्पुण्यमगण्यरूपम् ॥ ७८ ॥

व्या ॥ कुमारमिति । कुलशैलधुर्यं कुलाचलवत् भारवाहिनम् । परमाभिरूप्यम्—परमम् आभिरूप्यं सौन्दर्यं यस्य तम् । बिम्बाधरा बिम्बतुल्याधरा । जननान्तरेषु अन्यजन्मसु । अगण्यरूपम्—अगण्यम् असङ्ख्येयं रूपं स्वरूपं यस्य तत् ॥ ७८ ॥

सुधानिधानं तुहिनांशुबिम्बं
लक्ष्मीविमानानि च पङ्कजानि ।
आतन्वता पूर्वममुष्य वक्त्र-
निर्माणयोग्येव कृता विधात्रा ॥ ७९ ॥

व्या ॥ सुधेत्यादि । सुधानिधानम् अमृतनिधिम् । तुहिनांशुबिम्बं चन्द्रबिम्बम् । लक्ष्मीविमानानि लक्ष्मीनिवासस्थानानि । वक्त्रनिर्माणयोग्या—वक्त्रनिर्माणस्य मुखसृष्टेः योग्या अभ्यासः ; ‘योग्याभ्यासः परिचयः’ इति वैजयन्ती। चन्द्रपङ्कजानां निर्माणाभ्यासवशादेव ब्रह्मा अस्य वदनं निर्ममे इति भावः ॥ ७९ ॥

निर्माणकाले भुवनत्रयस्य
संभृत्य संभृत्य समार्पितेन ।
सौन्दर्यसारेण सरोजजन्मा
प्रायेण चक्रे युवराजमेनम् ॥ ८० ॥

व्या ॥ निर्माणकाल इति । निर्माणकाले सृष्टिसमये । संभृत्य संभृत्य संगृह्य संगृह्य । समार्पितेन विन्यस्तेन । त्रिजगत्सौन्दर्यसारभूतोऽयं कुमार इति भावः ॥ ८० ॥

युवानमेनं युगदीर्घबाहुं
द्रष्टुं त्रिलोकस्पृहणीयशोभम् ।
अस्माकमक्ष्णामयुतं विरिञ्च-[1]
स्त्रिलोकवेदी न चकार कस्मात् ॥ ८१ ॥

व्या ॥ युवानमिति । युगदीर्घबाहुम्—युगवत् ईषान्तबन्धनवत्; 'युगमीषान्तबन्धनम्' इति वैजयन्ती, दीर्घौ बाहू यस्य सः । त्रिलोकस्पृहणीयशोभम्—अवयवाः लोकास्त्रिलोकाः, तैः स्पृहणीया शोभा यस्य तम् । अयुतम् दशसहस्रम् । विरिञ्चः ब्रह्मा; 'विरिञ्चोऽजो विरिञ्चनः' इत्यमरः । त्रिलोकवेदी लोकत्रयज्ञः ॥ ८१ ॥

अमुष्य वक्त्रामृतभानुबिम्ब-
संभूतसौन्दर्यसुधोपयोगात् ।
आपद्यते दृष्टियुगं न केषा-
मत्रैव जन्मन्यनिमेषभावम् ॥ ८२ ॥

व्या ॥ अमुष्येति । वक्त्रामृतभानुबिम्बसंभूतसौन्दर्यसुधोपयोगात्—वक्त्रमेवामृतभानोश्चन्द्रस्य बिम्बं मण्डलं तस्मात् संभूता सौन्दर्यमेव सुधा

---

[1] विरिञ्चि. P.

तस्या उपयोगात् सेवनात् । आपद्यते प्राप्नोति । अनिमेषभावं विस्मयवशात् निमेषशून्यत्वं देवभूयं च । अस्य सौन्दर्यं पश्यन्तः सर्वेऽपि निर्निमेषचक्षुषो भवन्तीत्यर्थः ॥ ८२ ॥

इत्यादिमासां गिरमत्युदारा-
माकर्णयन् कर्णसुखायमानाम् ।
प्रदक्षिणीकृत्य पुरीं कुमारः
प्राविक्षदन्तर्भवनं नृपस्य ॥ ८३ ॥

व्या॥ इत्यादिति । इत्यादिम—इति आदिर्यस्याः सा ताम् । अत्युदाराम् अतिमहतीम् । कर्णसुखायमानां श्रोत्रयोः सुखं कुर्वतीम् । अन्तर्भवनम् अन्तर्गृहम् ॥ ८३ ॥

प्रविश्य दूरावनतेन मूर्ध्ना
बद्धप्रणामाञ्जलिकुड्मलेन ।
तया समेतः शकवंशदीपः
प्रियोत्तरङ्गं पितरं ववन्दे ॥ ८४ ॥

व्या ॥ प्रविश्येति । दूरावनतेन दूरादेव नम्रेण । बद्धप्रणामाञ्जलिःकुड्मलेन—बद्धः प्रणामस्याञ्जलिः कुड्मलः मुकुल इव यस्मिंस्तेन; 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । प्रियोत्तरङ्गम्—प्रियेण संतोषेणोत्तरङ्गं पूर्णम् ॥ ८४ ॥

उत्थाप्य दूरानतमूढभार्य-
मुदञ्चिताभ्यां भुजपञ्जराभ्याम् ।
रोमोद्गमाध्यासितगात्रयष्टि-
रुर्वीपतिः सादरमालिलिङ्ग ॥ ८५ ॥

व्या ॥ उत्थाप्येति । ऊढभार्यम्—ऊढा परिणीता भार्या येन तम् । उदञ्चिताभ्याम् उद्धृताभ्याम् । भुजपञ्जराभ्याम्—भुजौ पञ्जराविव ताभ्याम् । रोमोद्गमाध्यासितगात्रयष्टिः—रोमोद्गमेन रोमाञ्चेन अध्यासिता व्याप्ता गात्रयष्टिस्तनुलता यस्य सः ॥ ८५ ॥

अनन्तरं काञ्चनपात्रसंस्थैः
कर्पूरदीपैः परिवारनार्यः ।
अमुष्य भद्रासनमास्थितस्य
नीराजनं मङ्गलमन्वतिष्ठन् ॥ ८६ ॥

व्या ॥ अनन्तरमिति । काञ्चनपात्रसंस्थैः स्वर्णपात्रस्थितैः । परिवारनार्यः परिवारयोषितः । नीराजनम् आरात्रिकम् ॥ ८६ ॥

इति विहितविवाहं विश्वविश्रान्तकीर्तिं
त्रिजगदवनदीक्षाबद्धकक्षं कुमारम् ।
नरपतिरवलोक्य प्रीयमाणः स मेने
निजकुलमतितुङ्गं निह्नुतारातिगर्वम् ॥ ८७ ॥

इति बुद्धघोषविरचिते पद्यचूडामणिनाम्नि महाकाव्ये चतुर्थः सर्गः ॥

व्या ॥ इतीति । विहितविवाहं कृतोद्वाहम् । विश्वविश्रान्तकीर्तिम्—विश्वस्मिन् विश्रान्ता व्याप्ता कीर्तिर्यस्य तम् त्रिजगदवनदीक्षाबद्धकक्षम्—त्रिजगतः जगत्त्रयस्य अवनदीक्षायां रक्षाव्रते बद्धकक्षं बद्धकच्छम्, सन्नद्धमित्यर्थः । निह्नुतारातिगर्वम्—निह्नुतः तिरस्कृतः अरातीनां शत्रूणां गर्वः येन तादृशम् । मालिनी वृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ८७ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां चतुर्थः सर्गः ॥

श्रीः ॥

पञ्चमः सर्गः

तनः कुमारस्य समग्रवैभवो
नराधिनाथो नवयौवनाश्रियः ।
ऋतूत्सवानामुपसेवनक्षमा-
नकारयत्रीनतुलान् महालयान् ॥ १ ॥

व्या ॥ तत इति । समग्रवैभवः—समग्रं पुष्कलं वैभवम् ऐश्वर्यं यस्य सः । नवयौवनाश्रियः—नवा यौवनस्य श्रीः संपत् यस्य तस्य ऋतूत्सवानां हेमन्तवसन्तवर्षोत्सवानाम् । उपसेवनक्षमान् उपभोगार्हान् अतुलान् असदृशान् ॥ १ ॥

स तेषु सद्मस्वधिराजनन्दनो
विचित्रविन्यासविशेषशालिभिः ।
विनोद्यमानो वरवारयोषितां
विलासनृत्तैर्विजहार हारिभिः ॥ २ ॥

व्या॥ स इति । सद्मसु गृहेषु । विचित्रविन्यासविशेषशालिभिः—विचित्रैराश्चर्यभूतैः विन्यासविशेषैः हस्तपादादिन्यासभेदैः शालन्त इति तादृशैः । विनोद्यमानः विनोदं प्राप्यमाणः । वरवारयोषितां श्रेष्ठवेश्याङ्गनानाम्; 'वारस्त्री गणिका वेश्या' इत्यमरः । विलासनृत्तैः क्रीडानर्तनैः । हारिभिः मनोहरैः ॥ २ ॥

बभूव वर्षासमयोऽथ मेदिनी-
कठोरघर्मज्वरशान्तिकर्मठः ।
अशेषकान्तारशिखण्डिमण्डली-
विलासलास्यक्रमदेशिकेश्वरः ॥ ३ ॥

व्या ॥ बभूवेति । मेदिनीकठोरघर्मज्वरशान्तिकर्मठः—मेदिन्याः भूमेः कठोरः कठिनः यो घर्मज्वरः उष्णतापः तस्य शान्तौ कर्मठः कर्मशूरः; 'कर्मशूरस्तु कर्मठः' इत्यमरः। अशेषकान्तारशिखण्डिमण्डलीविलासलास्यक्रमदेशिकेश्वरः—अशेषकान्तारेषु कृत्स्नवनेषु या शिखण्डिमण्डली मयूरसमूहः, 'केकी शिखण्डी चित्रपत्रकः' इति वैजयन्ती, तस्य विलासलास्यस्य क्रीडानृत्तस्य क्रमे संप्रदाये देशिकेश्वरः आचार्यश्रेष्ठः ॥ ३ ॥

पयोधराः केचन काचमेचकाः
श्वकाशिरे चण्डसमीरणेरिताः ।
शनैः शनैरम्बरकृष्णभोगिना
विमुच्यमाना इव जीर्णकञ्चुकाः ॥ ४ ॥

व्या ॥ पयोधरा इति । पयोधराः मेघाः । काचमेचकाः—काचमणिवत् नीलाः ; 'काचोऽक्षिरोगे शिक्ये मणौ मृदि' इति हेमचन्द्रः । चण्डसमीरणेरिताः—चण्डेन प्रबलेन समीरणेन वायुना ईरिताः प्रेरिताः । अम्बरकृष्णभोगिना—अम्बरं गगनमेव कृष्णभोगी कृष्णसर्पः तेन । विमुच्यमानाः त्यज्यमानाः । जीर्णकञ्चुकाः जीर्णनिर्मोकाः ; 'समौ कञ्चुकनिर्मोकौ' इत्यमरः ॥ ४ ॥

तदा समारुह्य विहारमण्डपं
सहैव वध्वा सरसीरुहेक्षणः ।
प्रदर्शयन् मीनदृशः पयोधरान्
प्रचक्रमे वर्णयितुं तपात्ययम् ॥ ५ ॥

व्या ॥ तदेति । विहारमण्डपं क्रीडामण्डपम् । मीनदृशः—मीनाविव दृशौ यस्यास्तस्याः, सुन्दर्याः। पयोधरान् मेघान् । तपात्य-

यम्—तपस्य निदाघस्य, 'उष्ण ऊष्मागमस्तपः' इत्यमरः, अत्ययो नाशः तम्, वर्षाकालमित्यर्थः ॥ ५ ॥

इतः सरोजाक्षि विलोकयाम्बुदा-
नुदन्वदम्भोभरपश्यतोहरान् ।
वियत्तलाभोगविलासदर्पण-
प्रविष्टभूमण्डलबिम्बसंनिभान् ॥ ६ ॥

व्या ॥ इत इति । उदन्वदम्भोभरपश्यतोहरान्—उदन्वतः समुद्रस्य अम्भसां जलानां भरस्य भारस्य पश्यतोहरान् चोरान्; पश्यत अनादृत्य हरतीति पश्यतोहरः, 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति षष्ठ्या अलुक्; 'पश्यतो यो हरत्यर्थं स चोरः पश्यतोहरः' इति वैजयन्ती । वियत्तलाभोगविलासदर्पणप्रविष्टभूमण्डलबिम्बसंनिभान्—वियत्तलस्य आकाशप्रदेशस्य आभोगो विस्तार एव विलासः दर्पणः क्रीडादर्शः तस्मिन् प्रविष्टस्य प्रतिफलितस्य भूमण्डलस्य बिम्बेन सदृशान् ॥ ६ ॥

ऋतुश्रिया दीप्ततटित्प्रदीपिका-
समार्जितैरञ्जनसंचयैरिव ।
नतभ्रु नव्यैः शकलैः पयोमुचां
नभःस्थली पात्रमि[1]यं विभाव्यते ॥ ७ ॥

व्या ॥ ऋतुश्रियेति । ऋतुश्रिया ऋतुलक्ष्म्या । दीप्ततटित्प्रदीपिकासमार्जितैः—दीप्ताभिः तटिद्भिरेव प्रदीपिकाभिः समार्जितैः संपादितैः । अञ्जनसंचयैः कज्जलसमूहैः। नतभ्रु—नते भ्रुवौ यस्यास्तस्याः

---

[1] मिदं. V. P. T.

संबुद्धिः । शकलैः खण्डैः । पात्रं मषीजनकपात्रम् । विभाव्यते संभाव्यते ॥ ७ ॥

पयोदकालेन चिरप्रवासिना
समागतेनाभिनवं प्रिये दिशाम् ।
विमुच्यमाना इव केशवेणयो
विभान्ति कामं नवमेघपङ्क्तयः ॥ ८ ॥

व्या ॥ पयोदकालेनेति । पयोदकालेन मेघकालेन । चिरप्रवासिना दीर्घकालं प्रोषितेन । अभिनवमिति क्रियाविशेषणम् । प्रिये कान्ते, इति संबोधनम् । दिशां हरिताम्, विरहिणीनामिति च ध्वनिः । विमुच्यमानाः मुच्यमानाः । अत्र प्रियप्रवासेन वेणीकृतानां केशानामिदानीं तदागमने संस्करणार्थमामुच्यमानत्वम् । केशवेणयः केशबन्धाः ॥ ८ ॥

तपात्ययाभ्यागमनेन शाम्यतो
निदाघरूपस्य कृपीटजन्मनः ।
विजृम्भमाणा इव धूमवीचयो
विशन्ति मेघावलयो वियत्तलम् ॥ ९ ॥

व्या ॥ तपात्ययेत्यादि । तपात्ययाभ्यागमनेन— वर्षाकालप्राप्त्या । निदाघरूपस्य उष्णकालरूपस्य । कृपीटजन्मनः—कृपीटात् जलात् जन्म उत्पत्तिर्यस्य तस्य, अग्नेः ; 'कृपीटमुदरे जले' इति रत्नकोशः । अग्नेः जलजत्वम् 'अद्भ्योऽग्निर्ब्रह्म तः क्षत्रम्' इति मनुवचनाज्ज्ञेयम् । 'कृपीटयोनिर्ज्वलनः' इत्यमरः । धूमवीचयः धूमपरम्पराः । वियत्तलम् आकाशप्रदेशम् ॥ ९ ॥

पुरन्दराक्रान्तिभयेन ये पुरा
  पयोनिधिं प्रापुरलूनपक्षकाः ।
समुत्पतन्तीव त एव भूधरा-
  स्ततः समुद्यन्नववारिदच्छलात् ॥ १० ॥

व्या ॥ पुरन्दरेत्यादि । पुरन्दराक्रान्तिभयेन—पुरन्दरस्य इन्द्रस्य, 'पुरुहूतः पुरन्दरः' इत्यमरः, आक्रान्तेः आक्रमणात्, पक्षच्छेदार्थमिति भावः, भयेन । ये पर्वताः । पयोनिधिं समुद्रम् । अलूनपक्षकाः—अलूनाः अच्छिन्नाः पक्षाः गरुतः येषां ते । ततः समुद्रात् । समुद्यन्नववारिदच्छलात्—समुद्यतामुज्जृम्भमाणानां नववारिदानां नीलमेघानां छलात् व्याजात्; 'छलं छद्मस्खलितयोः' इति हेमचन्द्रः ॥ १० ॥

मृगाक्षि विद्युल्लतिकाकरम्बितै-
  र्नभोऽवकाशो जलदैर्विराजते ।
पयोनिधिर्विद्रुमवल्लिवेल्लितै-
  र्युगक्षये कर्दमगोलकैरिव ॥ ११ ॥

व्या ॥ मृगाक्षीति । विद्युल्लतिकाकरम्बितैः—विद्युल्लतिकाभिः तडिल्लताभिः करम्बितैः मिश्रितैः । नभोऽवकाशः गगनप्रदेशः । विद्रुमवल्लिवेल्लितैः—विद्रुमवल्लिभिः प्रवाललताभिः वेल्लितैः व्याप्तैः । युगक्षये कल्पान्ते कर्दमगोलकैः पङ्कपिण्डैः; 'गोलकस्तु जारतो विधवासुते । अलिञ्जरे गुडे पिण्डे' इति हेमचन्द्रः । कल्पान्ते सर्वे समुद्राः शुष्यन्तीति आगमिकाः ॥ ११ ॥

शिखण्डिनामद्भुतताण्डवश्रिया-
मरण्यरङ्गे मधुरप्रणादिनाम् ।
विलोक्य विद्युन्नयनेन विभ्रमान्
प्रशंसतीव स्तनितेन तोयदः ॥ १२ ॥

व्या ॥ शिखण्डिनामिति । शिखण्डिनाम्—शिखण्डा बर्हींषि एषां सन्तीति शिखण्डिनः, तेषां मयूराणाम्; 'शिखण्डो बर्हचूडयोः' इति हेमचन्द्रः । अद्भुतताण्डवश्रियाम्—अद्भुता ताण्डवश्रीः नृत्यशोभा येषां तेषाम् । अरण्यरङ्गे—अरण्ये एव रङ्गे नृत्यस्थाने । मधुरप्रणादिनाम्—मधुरं यथातथा प्रणदताम् । विद्युन्नयनेन तटिद्रूपनेत्रेण । विभ्रमान् विलासान् । स्तनितेन गर्जितेन; 'स्तनितं गर्जितं मेघनिर्घोषे' इत्यमरः ॥ १२ ॥

कलापिनः काञ्चनकाहलोपमान्
फणीन्द्रलोकान् परिगृह्य चञ्चुभिः ।
गभीरकेकामुखरीकृताम्बरा
नदन्ति चक्रीकृतबर्हमण्डलाः ॥ १३ ॥

व्या ॥ कलापिन इति । कलापिनः—कलापाः बर्हाः एषां सन्तीति कलापिनः, मयूराः; 'कलापो भूषणे बर्हे' इत्यमरः । काञ्चनकाहलोपमान्—काञ्चनस्य हेम्नः यत् काहलं वाद्यविशेषः तेन तुल्यान्; 'काहलं तु स्याद्भृशे चाव्यक्तवाचि च । शुष्के च वाद्यभेदे च' इति हेमचन्द्रः । फणीन्द्रलोकान् सर्पसमूहान्; लोकशब्दः समूहार्थोऽपि कविभिः प्रयुज्यते । यथाच बाणः 'अरतिगृहीतश्च विसर्जयाबभूव राजलोकम्' इत्यादि । गभीरकेकामुखरीकृताम्बराः—

गभीरया केकया मयूरवाण्या, 'केका वाणी मयूरस्य' इत्यमरः, मुखरीकृतम् अम्बरं यैस्ते । चक्रीकृतबर्हमण्डलाः—चक्रीकृतं वलयीकृतं बर्हमण्डलं पिञ्छसमूहो यैस्ते; 'पिञ्छबर्हे नपुंसके' इत्यमरः ॥ १३ ॥

सुवर्णकारेण तपात्ययात्मना
पयोदपालीनिकषोपलान्तरे ।
निघृष्यमाणा इव हेमराजय-
स्तटिल्लता भान्ति चकोरलोचने ॥ १४ ॥

व्या ॥ सुवर्णकारेणेति । सुवर्णकारेण सुवर्णमयाभरणशिल्पिना नाडिंधमेन; 'नाडिंधमः स्वर्णकारः' इत्यमरः । तपात्ययात्मना वर्षर्तुस्वरूपिणा । पयोदपालीनिकषोपलान्तरे पयोदपाल्या मेघपङ्क्त्यैव निकषोपलस्य शाणोपलस्य, 'शाणस्तु निकषः कषः' इत्यमरः, अन्तरे मध्ये । निघृष्यमाणाः विलिख्यमानाः । हेमराजयः स्वर्णरेखाः । चकोरलोचने इति संबुद्धिः ॥ १४ ॥

मलीमसं केवलमङ्गमन्तरं
विशुद्धमन्तःकरणं[1] तु मामकम् ।
इति स्फुरच्चञ्चलदीधितिच्छला-
द्विभिद्य तं दर्शयतीव वारिदः ॥ १५ ॥

व्या ॥ मलीमसमिति । मलीमसं मलिनम् । अन्तरं बाह्यम्; 'अन्तरः परिधानीये बाह्ये स्वीयेऽन्तरात्मनि' इति वैजयन्ती ।

---

[1] णस्य. P. T.

मामकं मत्संबन्धि । स्फुरच्चञ्चलदीधितिच्छलात्—स्फुरन्तीनां चञ्चल-दीधितीनाम् अचिरद्युतीनां तटितां छलात् व्याजात् । विभिद्य विदार्य । तम् इमं विषयम् ॥ १५ ॥

समुद्रनेमी[1]वहनस्य भारिण-
श्चतुर्महासागरमध्यवर्तिनः ।
कुलाद्रिकूपे(टे)षु तटिद्गणावृता
विभान्ति सीता इव मेघपङ्क्तयः ॥ १६ ॥

व्या ॥ समुद्रेत्यादि । समुद्रनेमीवहनस्य—समुद्रः नेमी यस्याः सा समुद्रनेमी भूमिः तस्या वहनस्य । भारिणः भारवहनशीलस्य । चतुर्महासागरमध्यवर्तिनः—चतुर्णां महासागराणां मध्ये वर्तिनः वराह-मूर्तेः इति स्यात् । कुलाद्रिकूटेषु—कुलाद्रीणां कुलपर्वतानां कूटेषु शिखरेषु । तटिद्गणावृताः—तटितां विद्युतां गणैरावृताः । सीता इव लाङ्गलपद्धतय इव । मेघपङ्क्तयः मेघराजयः । व्याम्रः पर्वतेनोपमानं सुग्रहम् । तत्रस्थमेघपङ्क्तीनां हलकर्षणजातसीताभिरुपमानम् अधस्स्थ-वराहस्य स्फुरत्येव । अतो विचार्यताम् ॥ १६ ॥

विजित्य विश्वत्रयमद्भुतश्रिया
प्रदानशौर्येण यशोमयामुना ।
समुच्छ्रितानां तव लाक्षि विद्युतो
जयध्वजानां जनयन्ति संशयम् ॥ १७ ॥

व्या ॥ विजित्येति । विश्वत्रयं जगत्त्रयम् । अद्भुतश्रिया—

---

[1] निवहस्य. P. [2] वारिणः. D. P. V.

अद्भुता श्रीर्यस्य तत् तेन । प्रदानशौर्येण दानवीर्येण । समुच्छ्रितानां समुत्क्षिप्तानाम् । तरलाक्षि हे चञ्चलनयने । संशयं भ्रमम् ॥ १७ ॥

सितच्छदोत्सारणवेत्रयष्टयो
विलोलदृष्टे विलसन्ति विद्युतः ।
घनाघनैः प्रोषिततर्जनक्रिया-
विघूर्ण[1]यमानाः करशाखिका इव ॥ १८ ॥

व्या ॥ सितच्छदेत्यादि । सितच्छदोत्सारणवेत्रयष्टयः—सितच्छदानां हंसानाम् उत्सारणे निष्कासने वेत्रयष्टयः । विलोलदृष्टे चञ्चलाक्षि इति संबुद्धिः । घनाघनैः वर्षुकमेघैः; 'वर्षुकाब्दो घनाघनः' इत्यमरः । प्रोषिततर्जनक्रियाविघूर्ण्यमानाः—प्रोषितानां विरहिणां तर्जनक्रियायां भर्त्सनकर्मणि विघूर्ण्यमानाः चालिताः । करशाखिकाः अङ्गुल्यः; 'अङ्गुल्यः करशाखाः स्युः' इत्यमरः ॥ १८ ॥

शतह्रदापादितचारुमौर्विकं
सलीलमादाय महेन्द्रकार्मुकम् ।
पयोदकालः शबरः शरव्रजै-
रपुण्डरीकां विदधाति मेदिनीम् ॥ १९ ॥

व्या ॥ शतह्रदेत्यादि । शतह्रदापादितचारुमौर्विकम्— शतह्रदाभिः विद्युद्भिः, 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः, आपादिता संपादिता चारुः मनोहरा मौर्विका ज्या यस्य तत्; 'ज्या जीवा मौर्विका द्रुणा' इति वैजयन्ती । महेन्द्रकार्मुकम् इन्द्रधनुः; 'धन्वशरासनको-

---

[1] र्णमानाः. P. 'ь. M

दण्डकार्मुकम्' इत्यमरः। पयोदकालः वर्षाकालः। शबरः किरातः; 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः। शरव्रजैः—शराणि जलान्येव शराः बाणाः तेषां समूहैः; 'शरं जले। शरः पुनर्दधिसरे काण्डतेजनयोरपि' इति हेमचन्द्रः। अपुण्डरीकाम्—न विद्यन्ते पुण्डरीकाणि सिताम्भोजान्येव पुण्डरीका व्याघ्रा यस्यां ताम्; 'पुण्डरीकं सिताम्भोजम्,' 'व्याघ्रेऽपि पुण्डरीको ना' इत्युभयत्रामरः॥ १९॥

भुजङ्गभुग्वान्तफणामणिश्रियः
  स्फुरन्ति भूम्ना पुरुहूतगोपकाः।
प्रचण्डधाराहतरत्नसूदर-
  प्रकीर्णरत्नोपलखण्डकान्तयः॥ २०॥

व्या॥ भुजङ्गेत्यादि। भुजङ्गभुग्वान्तफणामणिश्रियः—भुजङ्गभुग्भिः मयूरैः वान्तानाम् उद्गीर्णानां फणामणीनां फणारत्नानां श्रीरिव श्रीर्येषां ते। भूम्ना अतिशयेन। पुरुहूतगोपकाः इन्द्रगोपकाः कीटविशेषाः। प्रचण्डधाराहतरत्नसूदरप्रकीर्णरक्तोत्पलखण्डकान्तयः—प्रचण्डधाराभिः उग्रजलसन्ततिभिः आहतायाः रत्नसुवः भूमेः उदरात् प्रकीर्णानां रत्नोपलखण्डानां रत्नशकलानां कान्तिरिव कान्तिर्येषां ते; 'अचला कीलिनी पेरा बीजसू रत्नसूः स्वसूः' इति वैजयन्ती॥ २०॥

शरन्निशाकाशतलोदरप्रभा
  सहोदरे नूतनशाद्वलस्थले।

---

¹ श्रियः. C. P. V.

पतन्ति वज्रायुधगोपकीटकाः ।
समग्रसन्ध्यारुणतारकोपमाः ॥ २१ ॥

व्या ॥ शरदित्यादि । शरन्निशाकाशतलोदरप्रभासहोदरे— शरन्निशायां शारदरात्र्याम् आकाशतलोदरस्थ गगनमध्यभागस्य प्रभायाः कान्त्याः सहोदरे सदृशे । नूतनशाद्वलस्थले— नूतनं यत् शाद्वलस्थलं शादहरितप्रदेशः तस्मिन्; 'शाद्वलः शादहरिते,' 'शादो जम्बालशष्पयोः' इति चामरः । वज्रायुधगोपकीटकाः इन्द्रगोपाख्यकीटकाः । समग्रसन्ध्यारुणतारकोपमाः—समग्रसन्ध्यायां पूर्णसन्ध्यायाम् अरुणानां तारकाणामुपमा येषां ते ॥ २१ ॥

वियत्पृथिव्योः कियदन्तरं भवे-
दिति प्रमातुं प्रथमेन वेधसा ।
प्रसार्यमाणा इव मानरज्जवः
पतन्ति धाराः परितः पयोमुचाम् ॥ २२ ॥

व्या ॥ वियदित्यादि । वियत्पृथिव्योः द्यावापृथिव्योः । अन्तरम् अवकाशः ।[1] प्रमातुं परिच्छेत्तुम् । प्रसार्यमाणाः विस्तीर्यमाणाः । मानरज्जवः परिच्छेदकपाशाः ॥ २२ ॥

इयं चकोराक्षि पयोदमालिका
प्रकामवाचाटबकोटमण्डली ।
उपात्तशङ्का स्फुटमिक्षुधन्वनः
प्रयाणमुद्घोषयतीव दिङ्मुखे ॥ २३ ॥

---

[1] पतिताः. M. P. T.

व्या ॥ इयमिति । पयोदमालिका मेघपङ्क्तिः । प्रकामवाचाटबकोटमण्डली—प्रकामं यथातथा वाचाटा बहुभाषिणी बकोटानां बकानां मण्डली समूहः यस्यां सा; 'बको बकोटः कह्वः' इति वैजयन्ती । उपात्तशङ्खा—उपात्तः गृहीतः शङ्खः यया सा । इक्षुधन्वनः मदनस्य । उद्घोषयति प्रथयति ॥ २३ ॥

बकावलीविभ्रमकण्ठकम्बवो
वितीर्णशक्रायुधचित्रकम्बलाः ।
नमन्ति शैलेषु नवाभ्रकुञ्जरा-
स्तटाभिघातार्थमिवोढगर्जिताः ॥ २४ ॥

व्या । बकेत्यादि । बकावलीविभ्रमकण्ठकम्बवः—बकावल्यः बकपरम्परा एव विभ्रमाय विलासाय कण्ठकम्बवः कण्ठबद्धशङ्खाः येषां ते; 'शङ्खः स्यात् कम्बुरस्त्रियाम्' इत्यमरः । वितीर्णशक्रायुधचित्रकम्बलाः—वितीर्णं दत्तं शक्रायुधम् इन्द्रधनुरेव चित्रं कम्बलं कुथः येषां ते । नवाभ्रकुञ्जराः—नवाभ्राणि नूतनमेघा एव कुञ्जराः गजाः । तटाभिघातार्थं वप्रक्रीडार्थम् । ऊढगर्जिताः—ऊढं कृतं गर्जितं यैस्ते ॥ २४ ॥

क्षणप्रभाचम्पकदामभूषणा
दिशः सुरेन्द्रायुधचारुशेखराः ।
पयोदशृङ्गैर्नववारिगर्भितैः
परस्पराभ्युक्षमिव प्रकुर्वते ॥ २५ ॥

व्या ॥ क्षणप्रभेत्यादि । क्षणप्रभाचम्पकदामभूषणाः—क्षणप्रभाः विद्युत एव चम्पकदामानि चम्पकमालाः भूषणं यासां ताः ; 'ऐरा-

[1] विकीर्ण. C. [2] पाथोद. M. [3] भ्युक्षि M

वत्यः क्षणप्रभा' इत्यमरः । सुरेन्द्रायुधचारुशेखराः—सुरेन्द्रायुधम् इन्द्रधनुरेव चारुः मनोज्ञः शेखरः शिरोभूषणं येषां ते । पयोदशृङ्गैः—पयोदैर्मेघैरेव शृङ्गैः क्रीडाम्बुयन्त्रैः; 'शृङ्गं चिह्नविषाणयोः । क्रीडाम्बुयन्त्रे शिखरे' इति वैजयन्ती । नववारिगर्भितैः—नववारीणां नूतनजलानां गर्भः संजातः एषामिति तादृशैः; जलपूर्णैरित्यर्थः । परस्पराभ्युक्षम् अन्योन्यसेचनम्.॥ २५ ॥

'विगाहमानस्य नभःस्थलीगृहं
निदाघजिष्णोरृतुचक्रवर्तिनः ।
घनेन बद्धा इव तोरणस्रजः
सुरेन्द्रचापाः सुतरां चकासति ॥ २६ ॥

व्या ॥ विगाहमानस्येति । विगाहमानस्य प्रविशतः । नभःस्थलीगृहं गगनमन्दिरम् । निदाघजिष्णोः—निदाघस्य ग्रीष्मस्य कर्मणः जिष्णोः विजयशीलस्य । ऋतुचक्रवर्तिनः ऋतुसार्वभौमस्य वर्षर्तोः । तोरणस्रजः तोरणमालिकाः कर्त्र्यः । चकासति प्रकाशन्ते ॥ २६ ॥

प्रकम्पितायां कटकाषलीलया
दिगन्तभित्तौ स्तनयित्नुदन्तिना ।
विशीर्यमाणा इव तारकागणाः
पलाण्डुभासः करकाः पतन्त्यमूः ॥ २७ ॥

व्या ॥ प्रकम्पितायामिति । कटकाषलीलया—कटस्य गजगण्डस्य 'गजगण्डकटौ कटौ' इत्यमरः, काषलीलया कषणक्रीडया । दिगन्त-

---

[1] चापः. चकास्ति. M. [2] पलण्डु. C. M. T. [3] भासाः. M.

भित्तौ—दिगन्ते एव भित्तौ कुड्ये; 'भित्तिः स्त्री कुड्यम्' इत्यमरः। स्तनयित्नुदन्तिना—स्तनयित्नुर्मेघ एव दन्ती गजः तेन; 'स्तनयित्नुर्बलाहकः' इत्यमरः। विशीर्यमाणाः विशीर्णीक्रियमाणाः। पलाण्डुभासः—पलाण्डोः श्वेतकन्दस्य भाः इव भाः येषां ते; 'पलाण्डुस्तु श्वेतकन्दः' इति वैजयन्ती। करका वर्षोपलाः' 'वर्षोपलास्तु करकाः' इत्यमरः ॥ २७ ॥

पयःप्रवाहैः सममेव वारिदैः
परं समादाय महापयोनिधेः[1] ।
पुनर्विमुक्ता इव मौक्तिकोत्कराः
स्फुरन्ति वर्षोपलशर्कराः क्षितौ ॥ २८ ॥

व्या ॥ पयःप्रवाहैरिति । पयःप्रवाहैः समं जलप्रवाहैः सह । परम् अधिकं यथा तथा । विमुक्ताः विसृष्टाः । मौक्तिकोत्कराः मुक्ताफलसमूहाः । वर्षोपलशर्कराः करकखण्डाः; 'शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे। उपलायां शर्करायुग्देशे च शकलेऽपि च' इति हेमचन्द्रः ॥ २८ ॥

यथा यथा दृष्टिपथेऽभ्रमण्डले
विजृम्भते वैद्युतहव्यवाहनः ।
तथा तथा पान्थमृगीदृशां ध्रुवं
विजृम्भते चेतसि मन्मथानलः ॥ २९ ॥

व्या ॥ यथेति । अभ्रमण्डले आकाशप्रदेशे । वैद्युतहव्यवाहनः—विद्युत्संबन्धी अग्निः । पान्थमृगीदृशाम्—पन्थानं नित्यं

---

[1] निधौ. C.

गच्छन्तीति पान्थाः पथिकजनाः, तेषां मृगीदृशां सुन्दरीणाम्। मन्मथानलः कामाग्निः ॥ २९ ॥

निदाघतापज्वलिना वनस्थली
प्रसारयन्ती स्फुटकन्दलीकरम्।
मयूरकेकाविरुतैर्मनोहरैः
पयोदमभ्यर्थयतीव जीवनम्। ३० ॥

व्या ॥ निदाघेत्यादि। निदाघतापज्वलिता--निदाघतापेन घर्मोष्मणा ज्वलिता तापिता। स्फुटकन्दलीकरम्--स्फुटां कन्दलीं कन्दलीकुसुममेव करं हस्तम्। मयूरकेकाविरुतैः--मयूराणां केकाविरुतैः केकाध्वनिभिः। पयोदं मेघम्। जीवनं जलम्; 'जीवनं भुवनं वनम्' इत्यमरः ॥ ३० ॥

विनिद्रकान्तारकदम्बवाटिका-
प्रसूनकिञ्जल्कपरागवाहिनः।
हरन्ति मन्दाः पवमानकन्दलाः
शिखण्डिनां ताण्डवजं परिश्रमम् ॥ ३१ ॥

व्या ॥ विनिद्रेत्यादि। विनिद्रकान्तारकदम्बवाटिकाप्रसूनकिञ्जल्कपरागवाहिनः—विनिद्राणां विकसितानां कान्तारे स्थितायाः कदम्बबाटिकायाः नीपश्रेण्याः प्रसूनानां कुसुमानां किञ्जल्कपरागान् केसरपांसून् वहन्तीति तादृशाः; 'नीपप्रियकदम्बास्तु किञ्जल्कः केसरोऽस्त्रियाम्,' 'परागः कौसुमे रेणौ' इति चामरः। पवमानकन्दलाः वाताङ्कुराः। ताण्डवजं नर्तनजन्यम् ॥ ३१ ॥

विशङ्कटामम्बरराजवीथिकां
वलाहकानामटता[1] मितस्ततः।

---

[1] नटतां. V. P., नटां. M.

प्रतायमाना इव पादपांसवः
पतन्ति मन्दं परितः पयःकणाः ॥ ३२ ॥

व्या ॥ विशङ्कटामिति। विशङ्कटां विशालाम्; "विशङ्कटं पृथु बृहद्विशालम्" इत्यमरः। अम्बरराजवीथिकाम्—अम्बरं गगनमेव राजवीथी प्रधानवीथी ताम्। अटतां संचरताम्'। प्रतायमाना-वितन्यमानाः। पयःकणाः जलबिन्दवः ॥ ३२ ॥

विघुष्यमाणे तटिनाभ्रमण्डले
विधाय साक्ष्ये नववैद्युतानलम्।
ऋतुः पुरोधास्तटिनीसमुद्रयो-
प्रवर्तयत्यूर्मिकरग्रहोत्सवम् ॥ ३३ ॥

व्या ॥ विघुष्यमाण इति। विघुष्यमाणे शब्दायिते। तटिता करणेन। अभ्रमण्डले गगनप्रदेशे। साक्ष्ये साक्षिकर्मणि। नववैद्यु-तानलम्—नवं विद्युत्संबन्धिनमग्निम्। ऋतुः पुरोधाः इति व्यस्त-रूपकम्; 'पुरोधास्तु पुरोहितः' इत्यमरः। प्रवर्तयति निर्वर्तयति। ऊर्मिकरग्रहोत्सवम्—ऊर्मयः वीचय एव कराः तेषां ग्रहो ग्रहणं विवाहः स एव उत्सवः तम् ॥ ३३ ॥

अनेन कालेन विनामृतद्रवै-
र्निकाममापादितसर्वसंपदा।
अशेषतो भूरपि सर्वथा भजे-
दपुत्रिणीनामधिदेवतापदम् ॥ ३४ ॥

व्या ॥ अनेनेति। अनेन कालेन विना वर्षाकालेन विना। अमृतद्रवैः अमृतानां जलानां द्रवैः स्यन्दैः। निकामम् अत्यन्तम् आपादितः सर्वसंपदा —आपादिताः निष्पादिताः सर्वसंपदः येन तेन। अशेषतः साकल्येन। अपुत्रिणीनां पुत्ररहितस्त्रीणाम्। अधिदेवतापदं प्रधानदेवतास्थानम्। यद्ययं वर्षाकालो नाभविष्यत् तदा जलाभावात् भूमिः सस्यादिरहिता वन्ध्या अभविष्यदित्यर्थः ॥ ३४ ॥

इति प्रशंसामुखरे सकौतुकं
स्ववृत्तमुद्दिश्य नरेन्द्रनन्दने।
उपोढलज्जा इव दिङ्मुखान्तरे
तिरोबभूवुः सकलाः पयोधराः ॥ ३५ ॥

व्या ॥ इतीति। प्रशंसामुखरे—प्रशंसया श्लाघया मुखरे शब्दायमाने। स्ववृत्तम्—स्वेषां मेघानां वृत्तं चरितम्। उपोढलज्जाः धृतव्रीडाः। दिङ्मुखान्तरे—दिङ्मुखानां मध्यभागे। तिरोबभूवुः—अन्तर्हिता बभूवुः। पयोधराः मेघाः ॥ ३५ ॥

दिगङ्गनावर्णघृतानुलेपनं
[1]सितच्छदस्वैरविहारवीथिका।
सरोजिनीयौवनविभ्रमोदयः
समाविरासीत् समयोऽथ शारदः ॥ ३६ ॥

व्या ॥ दिगङ्गनेत्यादि। दिगङ्गनावर्णघृतानुलेपनं—दिशामेवाङ्गनानां वर्णघृतानुलेपनं कान्तिजनकघृतनिर्मितलेपनभूतम्; दिशां प्रकाशकमिति यावत्। सितच्छदस्वैरविहारवीथिका—सितच्छदानां हंसानां

---

[1] विभ्रमयौवनो. V.

स्वैरविहारस्य यथेच्छलीलायाः वीथिका, 'हंसो मरालो नीलाक्षश्चक्रपक्षः सितच्छदः' इति वैजयन्ती । सरोजिनीयौवनविभ्रमोदयः— सरोजिनीनां नलिनीनां यौवनविभ्रमस्य तारुण्यविलासस्य उदयः आविर्भावरूपः । शारदः शरत्संबन्धी ॥ ३६ ॥

तटित्प्रियायाः सविलाससंपदो
बलाकिकायाश्च विशुद्धजन्मनः ।
वियोगदुःखादिव मौनमुद्रिताः
प्रपेदिरे पाण्डरतां पयोधराः ॥ ३७ ॥

व्या ॥ तटिदित्यादि । तटित्प्रियायाः विद्युद्रूपकान्तायाः । सविलाससंपदः विभ्रमातिशयविशिष्टायाः । बलाकिकायाः बिसकण्ठिकायाः ; 'बलाका बिसकण्ठिका' इत्यमरः । विशुद्धजन्मनः— विशुद्धं धवलं पूतं च जन्म यस्यास्तस्याः । वियोगदुःखादिव विरहसंजातदुःखादिवेति हेतूत्प्रेक्षा । मौनमुद्रिताः— मौनेन मुद्रिताः प्रतिबद्धाः ; शरदि मेघाडम्बराभावादिति भावः । पाण्डरतां धावल्यम् । वियोगकाले दशसु मदनावस्थासु पाण्डरत्वस्यान्यतमत्वात् ॥ ३७ ॥

कदर्थितात्मीयगुणप्रकाशने
क्षयं प्रपन्ने सति वारिदागमे ।
प्रमोदहासा इव दिङ्मृगीदृशां
समुद्बभूवुः कलहंसमण्डलाः ॥ ३८ ॥

व्या ॥ कदर्थितेत्यादि । कदर्थितात्मीयगुणप्रकाशने— कदर्थितं विनाशितम् आत्मीयगुणानां स्वीयगुणानां प्रकाशनं येन तस्मिन् ।

वारिदागमे वर्षाकाले। प्रमोदहासाः संतोषजनितहासाः। दिङ्मृगीदृशाम्—दिश एव मृगीदृशः स्त्रियः, तासाम्॥ ३८॥

सितच्छदानां श्रवणार्तिकारणं
निशम्य कोलाहलमुत्कचेतसाम्।
वियोगभाजस्तरूणीजना भृशं
निनिन्दुरन्तःकरणेन भार्गवम्॥ ३९॥

व्या॥ सितच्छदानामिति। सितच्छदानां हंसानाम्; अस्य कोलाहलमित्यनेनान्वयः। श्रवणार्तिकारणं श्रोत्रपीडावहम्। निशम्य आकर्ण्य। उत्कचेतसाम्—उत्कानि उत्सुकानि चेतांसि येषां तेषाम्। वियोगभाजः विरहिणः। भार्गवं परशुरामम्। हंसानां कोलाहलमाकर्ण्य विवृद्धविरहव्यथाः प्रोषितभर्तृकाः वर्षाकाले मानसं सरः प्रविष्टानां हंसानां पुनरागमनमार्गभूतं क्रौञ्चरन्ध्रं विहितवन्तं भार्गवं रामं निनिन्दुरित्यर्थः॥ ३९॥

अनन्तरत्नाकरफेनमण्डलै-
रनङ्गकीर्तिस्तबकभ्रमावहैः।
मरालवृन्दैर्वलमानपक्षकै-
रपूरि सर्वं हरिदन्तकन्दरम्॥ ४०॥

व्या॥ अनन्तेत्यादि। अनन्तरत्नाकरफेनमण्डलैः—अनन्तस्यामितस्य रत्नाकरफेनस्य समुद्रडिण्डीरस्य मण्डलैः समूहैरिव स्थितैः; 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। अनङ्गकीर्तिस्तबकभ्रमावहैः—

---

[1] जाताः. P.        श्रिया वहैः. V.

अनङ्गस्य मन्मथस्य कीर्तीनां यशसां स्तबकस्य गुच्छस्य भ्रममावहन्तीति तादृशैः। मरालबृन्दैः हंससमूहैः। वलमानपक्षकैः चञ्चलपक्षैः। हरिदन्तकन्दरम्--दिगन्तरूपं गह्वरम् ॥ ४० ॥

विकासिनां सप्तपलाशभूरुहां
विजृम्भमाणाः परितो रजोभराः।
हरिन्मुखानामधिवासचूर्णक-
भ्रमं वितेनुः प्रथमानसौरभाः ॥ ४१ ॥

व्या ॥ विकासिनामिति। विकासिनां विकचानाम्। सप्तपलाश भूरुहाम्—सप्त पलाशानि पर्वसु येषां तेषां भूरुहा सप्तच्छदवृक्षाणाम्; तत्कुसुमानामिति यावत्, अन्यथा पुष्परजसोऽसंभवात्। हरिन्मुखानाम्—दिशां मुखानामेव मुखानाम्। अधिवासचूर्णकभ्रमम्—अधिवासानामधिकवासनायुतानां चूर्णानां भ्रमम्। प्रवितेनुः विस्तारयामासुः। प्रथमानसौरभाः—प्रथमानं विस्तीर्यमाणं सौरभं येषां ते ॥ ४१ ॥

प्रवर्त्यमाने प्रमदैर्मदावलैः
समुल्बणे दानजलाभिवर्षणे।
गतेऽपि वर्षासमये महापगा
बभूवुरत्यन्तविवृद्धजीवनाः ॥ ४२ ॥

व्या ॥ प्रवर्त्यमान इति। प्रवर्त्यमाने क्रियमाणे। प्रमदैः प्रकृष्टमदैः। मदावलैः गजैः। समुल्बणे अधिके। दानजलाभिवर्षणे—दानजलस्य मदजलस्य अभिवर्षणे। महापगाः महानद्यः। अत्यन्तविवृद्धजीवनाः—अत्यन्तं विवृद्धं जीवनं जलं यासां ताः ॥ ४२ ॥

कलाधिनाथः करजालमुज्ज्वलं
प्रसारयामास हरित्सु निर्भरम् ।
चिरोत्सुकानां कुमुदाकरश्रियां
दृढाङ्कपालीमिव कर्तुमुन्मनाः ॥ ४३ ॥

व्या ॥ कलाधिनाथ इति । कलाधिनाथः चन्द्रः, शृङ्गारकलाभिज्ञो नायक इति च गम्यते । करजालं किरणसमूहम्, हस्तौ च । हरित्सु दिशासु । निर्भरं भृशम्; 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः । चिरोत्सुकानां चिरोत्कण्ठितानाम् । कुमुदाकरश्रियाम्—कुमुदाकराणां कुमुदिनीनां श्रियाम्; कौ भूमौ मुदां संतोषाणामाकरो निधानभूता श्रीः शोभा यासां तासां सुन्दरीणां नायिकानामिति च । दृढाङ्कपालीम्—दृढं यथातथा अङ्कपालीमालिङ्गनम; 'अङ्कपाली परिरम्भे' इति हेमचन्द्रः । उन्मनाः उत्सुकः ॥ ४३ ॥

वितायमानैः सितचन्द्रिकाभरै-
स्तरङ्गिताः क्षौमविशेषपाण्डरैः ।
विलज्जमाना द्विजराजदर्शना-
द्धृतावगुण्ठा इव दिग्वधूटिकाः ४४ ॥

व्या ॥ वितायमानैरिति । वितायमानैः प्रसार्यमाणैः । तरङ्गिताः व्याप्ताः । क्षौमविशेषपाण्डरैः—क्षौमवत् दुकूलवत् विशेषपाण्डरैः अतिधवलैः । द्विजराजदर्शनात्—द्विजराजस्य चन्द्रस्य दर्शनात् । धृतावगुण्ठाः—धृतः अवगुण्ठः यामिस्ताः । दिग्वधूटिकाः—दिश एव वधूटिकाः युवतयः ॥ ४४ ॥

---

[1] सरित्सु. ✓ [2] दृशाङ्क. ✓. ✓. [3] तूर्णा. ✓.

पतङ्गदावानललाङ्गितात्मनां
तमस्तमालद्रुमषण्डसंपदाम्।
मरुत्प्रकीर्णा इव भस्मधूलयः
शशङ्किरे शारदमेघपङ्क्तयः ॥ ४५ ॥

व्या ॥ पतङ्गेत्यादि । पतङ्गदावानललङ्घितात्मनाम्-- पतङ्गः सूर्य एव दावानलः वनवह्निः, 'पतङ्गः पक्षिसूर्ययोः' इत्यमरः, तेन लङ्घिना भक्षिताः आत्मानः स्वरूपाणि यासां तासाम्; सूर्यदग्धाना मिति यावत्; लङ्घिर्भक्षणार्थोऽपि । तथा च मालविकाग्निमित्रे—'एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः' इति । तमस्तमाल-द्रुमषण्डसंपदाम्-- तमसामेव तमालद्रुमाणां षण्डस्य समूहस्य संपदामतिशयानाम् । मरुत्प्रकीर्णाः वायुविक्षिप्ताः । भस्मधूलयः भस्मरजांसि । शारदमेघपङ्क्तयः शरत्कालस्थमेघराशयः ॥ ४५ ॥

विसृत्वरैः शारदिकैः पयोधरै-
र्विडम्बयामास विकीर्णमम्बरम् ।
तरङ्गभङ्गैः कलशाम्भसां निधे-
र्युगान्तभिन्नैर्लवणोदधेर्धुनिम् ॥ ४६ ॥

व्या ॥ विसृत्वरैरिति । विसृत्वरैः विसरणशीलैः । शारदिकैः शरत्कालभवैः । विडम्बयामास अनुचकार । तरङ्गभङ्गैः वीचिखण्डैः; विकीर्णस्येति विभक्तिविपरिणामेनान्वयः । कलशाम्भसां निधेः क्षीरसमुद्रस्य; 'क्षीरोदः कलशोदधिः' इति तत्पर्यायकलशोदधिशब्दे वैजयन्ती । युगान्तभिन्नैः-- युगान्ते प्रलयकाले भिन्नैः मिश्रैः । लवणोदधेः लवणसमुद्रस्य ॥ ४६ ॥

कृताभिषेकाः प्रथमं[1] घनाम्बुभि-
र्धृतोत्तरीयाः शरदभ्रसंचयैः ।
विलिप्तगात्र्यः[2] शशिरश्मिचन्दनै-
र्दिशो दधुस्तारकहारयष्टिकाम् ॥ ४७ ॥

व्या ॥ कृतेत्यादि । कृताभिषेकाः—कृतः अभिषेकः याभिस्ताः । घनाम्बुभिः वार्षिकमेघजलैः । धृतोत्तरीयाः—धृतमुत्तरीयं याभिस्ताः ; 'संव्यानमुत्तरीयं च' इत्यमरः । विलिप्तगात्र्यः—विलिप्तानि गात्राणि यासां ताः । शशिरश्मिचन्दनैः—शशिरश्मिभिः चन्द्रकिरणैरेव चन्दनपङ्कैः । तारकहारयष्टिकाम्—तारकाणामेव हाराणां यष्टिकां मुक्तास्रजम्, 'तारकं तारकापि च, इति शाश्वतः ॥ ४७ ॥

कृताप्लवानाम[3]चिरेण वारिदै-
र्दिशावधूनां रुचिराम्बरत्विषाम् ।
शरीरलग्ना इव तोयविप्रुष-
श्चकाशिरे सातिशयेन तारकाः ॥ ४८ ॥

व्या ॥ कृतेत्यादि । कृताप्लवानाम्—कृतः आप्लवः स्नानं यासां तासाम् ; 'स्नानं त्वाप्लाव आप्लवः' इति वैजयन्ती । रुचिराम्बरत्विषाम्—रुचिरा मनोहरा अम्बरत्विट् आकाशशोभा वस्त्रशोभा च यासां तासाम् ; 'अम्बरं व्योम्नि वाससि' इत्यमरः । तोयविप्रुषः जलबिन्दवः ; 'बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः' इत्यमरः ॥ ४८ ॥

विकासिनश्चन्द्रकरोपलालना-
द्विरेजिरे कैरवकोशराशयः ।

[1] प्रथमी C. P. [2] गात्राः. C. P. [3] प्लुतान्. C.

शरत्प्रसन्नेषु तटाकवारिषु
प्रविष्टबिम्बा इव तारकागणाः ॥ ४९ ॥

व्या ॥ विकासिन इति । चन्द्रकरोपलालनात्—चन्द्रकराणां चन्द्रकिरणानाम् उपलालनात् स्पर्शात् । कैरवकोशराशयः कुमुदकुड्मलराशयः ; 'सिते कुमुदकैरवौ' इत्यमरः ॥ ४९ ॥

विकस्वरा व्याञ्जितकण्टकाङ्कुरा
विमुक्तमाध्वीकमुदश्रुबिन्दवः ।
सरोजषण्डाः शरदं समागतां
विलोक्य विस्मेरमुखा इवाबभुः ॥ ५० ॥

व्या ॥ विकस्वरा इति । व्याञ्जितकण्टकाङ्कुराः— व्याञ्जितः प्रकटितकण्टकानां सूच्यग्राणामेव कण्टकानां रोमाञ्चानाम् अङ्कुराः यैस्तादृशाः ; सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । विमुक्तमाध्वीकमुदश्रुबिन्दवः—विमुक्ताः माध्वीकानां पुष्परसानामेव मुदश्रुणाम् आनन्दबाष्पाणां बिन्दवः यैस्ते । सरोजषण्डाः कमलसमूहाः । विस्मेरमुखाः प्रसन्नवदनाः ॥ ५० ॥

विकासभाजामभितः सरोरुहां
विलीयमानैर्मकरन्दनिर्झरैः ।
अगाधतां प्रापुरनीव पूरिताः
शरत्कृशा अप्यखिलाः सरोवराः ॥ ५१ ॥

व्या ॥ विकासेत्यादि । विकासभाजां विकसितानाम् । सरोरुहामिति मकरन्दनिर्झरैरित्यनेनान्वेति । विलीयमानैः स्यन्दमानैः । अगाधतां निम्नताम् । शरत्कृशाः—शरदा कृशाः शुष्काः ॥ ५१ ॥

विपक्वपुण्ड्रेक्षुपरुर्मुखच्युतै-
र्निरन्तरा मौक्तिकसारसंचयैः ।
उदारकैदारककुल्यकातटाः
प्रपेदिरे ताम्रनदीतटोपमाम् ॥ ५२ ॥

व्या ॥ विपक्वेत्यादि । विपक्वपुण्ड्रेक्षुपरुर्मुखच्युतैः—विपक्वानां पुण्ड्रेक्षूणाम् इक्षुविशेषाणां परुषां पर्वणां मुखेभ्यः च्युतैः स्रस्तैः ; 'परुः पर्व पुमान् ग्रन्थिः' इति वैजयन्ती । निरन्तराः सान्द्राः । मौक्तिकसारसंचयैः—मौक्तिकसाराणां मुक्ताश्रेष्ठाणां संचयैः समूहैः । उदारकैदारककुल्यकातटाः—उदारस्य महतः कैदारकस्य केदारसमूहस्य कुल्यकानां कृत्रिमाल्पसारितां तटाः ; 'कुल्याल्पा कृत्रिमा सरित्,' 'उदारो दातृमहतोः,' 'कैदारकं स्यात् कैदार्यं क्षेत्रं कैदारिकं गणे' इति चामरः । ताम्रनदीतटोपमाम्—ताम्रनद्याः ताम्रपर्ण्याः तटस्योपमां साम्यम् । समुद्रसंगतायाः ताम्रपर्ण्याः मौक्तिकसंबन्धः सुप्रसिद्धः ॥ ५२ ॥

वि[1]पाकह(भू)म्नानि(भि)विदीर्णदाडिमी-
फलप्रकीर्णैर्नवबीजजालकैः ।
क[2]रम्बिताः काननभूमयो बभुः
पुनः समुद्यत्सुरगोपका इव ॥ ५३ ॥

व्या ॥ विपाकेत्यादि । विपाकभूम्ना—विपाकस्य पाकस्य भूम्ना अतिशयेन । अभिविदीर्णदाडिमीफलप्रकीर्णैः—अभिविदीर्णेभ्यः अभितो विदलितेभ्यः दाडिमीफलेभ्यः मातुलङ्गफलेभ्यः प्रकीर्णैः समन्तात् प्रक्षिप्तैः । करम्बिताः व्याप्ताः । पुनः शरद्यपि । समुद्यत्सुरगोपकाः—

---

[1] विपक्त्रिमाक्रान्तविकीर्ण. P. ववक्रिमाक्रान्तविकीर्ण. C.

[2] सुरान्धिताः. P. विरन्धिताः. C.

समुद्यन्तः समुत्पद्यमानाः सुरगोपकाः इन्द्रगोपकाख्यकीटविशेषाः यासुः ता ॥ ५३ ॥

अमन्दपाकोदयशालिभिः फलै-
रवाङ्मुखीनाः कलमा ललक्षिरे ।
उपस्थितामात्मविनाशविक्रियां
विचिन्त्य शोकावनता इवाधिकम् ॥ ५४ ॥

व्या ॥ अमन्देत्यादि । अमन्दपाकोदयशालिभिः— अमन्दपाकस्य पूर्णपरिपाकस्य उदयेन शालन्त इति तादृशैः । फलैः सस्यैः; 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । सस्यं' इति केशवः । कलमाः शालिविशेषाः । ललक्षिरे ददृशिरे । उपस्थितां संनिहिताम । आत्मविनाशविक्रियाम्—आत्मनः स्वस्य विनाशरूपां विक्रियां विकारम् । शोकावनताः दुःखनम्राः ॥ ५४ ॥

विकीर्णपङ्काङ्कितशृङ्गकोटयः
खुरार्धचन्द्रक्षतकूलभूमयः ।
मुहुर्नदन्तो वृषभा मदोद्धता
स्तटाभिघातं सरितां वितेनिरे ॥ ५५ ॥

व्या ॥ विकीर्णेत्यादि । विकीर्णपङ्काङ्कितशृङ्गकोटयः—विकीर्णैः शीर्णैः पङ्कैः कर्दमैः अङ्किताः लाञ्छिताः शृङ्गकोटयः विषाणाग्राणि येषां ते । खुरार्धचन्द्रक्षतकूलभूमयः—खुरैः शफैः अर्धचन्द्रैरिव स्थितैः क्षता भिन्नाः कूलभूमयः तटप्रदेशाः यैस्ते; 'शफं क्लीबे खुरः पुमान्' इत्यमरः । तटाभिघातं कूलघातनम् ॥ ५५ ॥

अत्रान्तरे राजकुमारमेन-
माहूय पृथ्वीपतिराबभाषे ।
अयं जनः पुत्र तवास्त्रशिक्षा[1]-
विलोकनं प्रत्यभिवाञ्छतीति ॥ ५६ ॥

व्या ॥ अत्रान्तर इति । अत्रान्तरे शरत्कालदर्शनावसरे । **अस्त्रशिक्षाविलोकनम्**—अस्त्राणां शिक्षाया अभ्यासस्य विलोकनम् ॥ ५६ ॥

श्रुत्वा तु तत्सूर्यकुलावतंसः
प्रत्युज्जगाद प्रथमं नृपाणाम् ।
आलोक्यतां तात ममास्त्रशिक्षा
प्राप्ते दिने सप्तमसंख्ययेति ॥ ५७ ॥

व्या ॥ श्रुत्वेति । तत् पितृवाक्यम् । सूर्यकुलावतंसः सूर्यवंशशेखरभूतः । प्रत्युज्जगाद प्रत्युवाच । प्रथमम् अग्र्यम् । सप्तमसंख्यया, उपलक्षित इति शेषः; सप्तमे दिन इत्यर्थः ॥ ५७ ॥

अथागते सप्तमवासरान्ते
प्रजापतिर्बन्धु[2]जनेन सार्धम् ।
[3]तस्यास्त्रशिक्षाप्रविलोकनार्थ-
मध्यास्त भद्रासनमादरेण ॥ ५८ ॥

व्या ॥ अथेति । सप्तमवासरान्ते सप्तमदिनावसाने । प्रजापतिः राजा । तस्य कुमारस्य । भद्रासनं सिंहासनम्; 'अधिशीङ्स्थासां कर्म' इति अधिकरणस्य कर्मत्वात् द्वितीया ॥ ५८ ॥

---

[1] शिक्षणे. C. [2] गणेन. M. [3] अस्या. M.

एकेन बाणासनमाततज्य-
मन्येन हस्ताम्बुरुहेण बाणम् ।
समाददानः स पिनद्धमूर्ति-
रग्रे गुरोराविरभूत्कुमारः ॥ ५९ ॥

व्या ॥ एकेनेति । बाणासनम्—बाणाः अस्यन्ते क्षिप्यन्ते अनेनेति तादृशं धनुः । आततज्यम्—आतता बद्धा ज्या मौर्वी यस्मिंस्तत् । समाददानः गृह्णानः । पिनद्धमूर्तिः—पिनद्धा कवचसंवृता मूर्तिः तनुः यस्य सः; 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । गुरोः पितुः ॥ ५९ ॥

किं पुष्पधन्वा प्रतिलब्धमूर्तिः
किं [1]वावतीर्णो मघवान् सधन्वा ।
एवंविधा प्रादुरभूत्प्रजानां
विकल्पना विस्मितमानसानाम् ॥ ६० ॥

व्या ॥ किमिति । पुष्पधन्वा पुष्पं धनुः यस्य सः, मन्मथः; 'पुष्पधन्वा रतिपतिः' इत्यमरः । प्रतिलब्धमूर्तिः—प्रतिलब्धा पुनः प्राप्ता मूर्तिः शरीरं येन सः । मघवान् इन्द्रः । सधन्वा—धनुषा सह वर्तत इति तादृशः । विकल्पना संशयः । विस्मितमानसानाम् आश्चर्याविष्टचित्तानाम् ॥ ६० ॥

अदृष्टपूर्वा [2]मतिलोकशिल्पा-
मत्यद्भुतामप्रतिमप्रभावः ।

---

[1] विकीर्णो. V., वितीर्णो. C. [2] मवलोक. P. C.

बहुप्रका[1]रां पितुरस्त्रशिक्षां
संदर्शयामास स वीरवर्यः ॥ ६१ ॥

व्या ॥ अदृष्टेत्यादि । अदृष्टपूर्वां पूर्वमदृष्टाम् । अतिलोकशिल्पाम्--लोके यानि शिल्पानि तानि सर्वाण्यप्यतिक्रान्ताम्; लोकोत्तरशिल्पविशिष्टामित्यर्थः । अप्रतिमप्रभावः—नास्ति प्रतिमा उपमा यस्य तादृशः प्रभावो यस्य सः । बहुप्रकारां बहुविधाम् ॥ ६१ ॥

दृष्ट्वास्त्रशिक्षां जगदेकबन्धो-
रभूतपूर्वामवनीतलेषु ।
आत्मानमाखण्डलतुल्यधामा
विशामधीशो बहुमन्यते स्म ॥ ६२ ॥

व्या ॥ दृष्ट्वेति । जगदेकबन्धोः—जगताम् एकबन्धोः प्रधानमित्रस्य कुमारस्य । आखण्डलतुल्यधामा--आखण्डलस्य इन्द्रस्य तुल्यं समानं धाम तेजः यस्य सः । विशां प्रजानाम्; 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । बहुमन्यते स्म बहुमेने ॥ ६२ ॥

इत्थं धीरो दर्शयित्वास्त्रशिक्षां
धानुष्काणामग्रगण्यस्तरस्वी ।
आगोपालं स्तूयमानापदानो
लोकैरुच्चैराससादात्मगेहम् ॥ ६३ ॥

व्या ॥ इत्थमिति । धानुष्काणाम् धनुः प्रहरणमेषामिति धानुष्काः धन्विनः, तेषाम्; 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः ।

---

[1] प्रकारं. C.

अग्रगण्यः श्रेष्ठः । तरस्वी बलवान् । आगोपालं गोपालपर्यन्तम् । स्तूयमानापदानः— स्तूयमानम् अपदानं यस्य सः । शालिनी वृत्तम्; 'शालिन्युक्ता म्तौ तगौ गाऽब्धिलोकैः' इति लक्षणात् ॥ ६३ ॥

संगीतमङ्गलमहोत्सवसङ्गिनीभिः
साकं वधूभिरनुरागतरङ्गिताभिः ।
क्रीडागृहेषु विहरन्[1] क्षितिपालसूनु-
र्वर्षाणि कानिचिदसौ क्षपयांचकार ॥ ६४ ॥

इति बुद्धघोषविरचिते पद्यचूडामणिनाम्नि महाकाव्ये पञ्चमः सर्गः ॥

व्या ॥ संगीतेत्यादि । संगीतमङ्गलमहोत्सवसाङ्गिनीभिः—सङ्गीतमेव मङ्गलमहोत्सवः तेन साङ्गिन्यः संगताः ताभिः । अनुरागतराङ्गिताभिः- अनुरागेण संजाततरङ्गाभिः; प्रवृद्धानुरागाभिरित्यर्थः । क्षपयांचकार अतिवाहयामास । वसन्ततिलका वृत्तम्, 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ ६४ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां पञ्चमः सर्गः ॥

---

[1] निवसन्. C.

श्रीः.

षष्ठः सर्गः

प्राद्बभूव स[1]मयः सुभगो वसन्तः
प्रस्तावनालिकुलकोकिलकूजितानाम् ।
बाणाशयो मकरकेतनसायकानां
मौहूर्तिको मलयमारुतनिर्गमानाम् ॥ १ ॥

व्या ॥ अस्मिन् सर्गे त्रयस्त्रिंशत्पद्यैर्वसन्तर्तुं वर्णयति । प्रादुर्बभूवेति । सुभगः शोभनः । प्रस्तावना उपोद्धातः । अलिकुलकोकिलकूजितानाम्——अलिकुलस्य भ्रमरवर्गस्य कोकिलस्य पिकस्य च कूजितानां ध्वनीनाम् । बाणाशयः——बाणाः आशेरतेऽस्मिन्निति तादृशः निषङ्गः । मकरकेतनसायकानां मदनबाणानाम्; वसन्तः चूतादिवृक्षाणां कुसुमोद्गमकालः, जनानां कामोद्दीपकश्चेत्यर्थः । मौहूर्तिकः——मुहूर्तम् उचितकालं वक्तीति तादृशः दैवज्ञः; शैषिकः ठक्; मलयमारुतानां निर्गमनोचितः काल इत्यर्थः; 'स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि' इत्यमरः । मलयमारुतनिर्गमानाम्——मलयमारुतस्य दक्षिणानिलस्य निर्गमानां बहिष्क्रमणानाम् । सर्गेऽस्मिन् प्रायेण वसन्ततिलका वृत्तम् ॥ १ ॥

उ[2]च्चण्डदण्डधरकासरसार्वभौम-
संनाहभीत इव चण्डमयूखमाली ।
सद्यो विवर्तितहयो यमदिङ्मुखान्ता-
द्यात्रामधत्त हिमभूधरसंमुखीनाम् ॥ २ ॥

व्या ॥ उच्चण्डेत्यादि । उच्चण्डदण्डधरकासरसार्वभौमसंनाहभीतः——उच्चण्डस्यातिकोपनस्य दण्डधरकासरसार्वभौमस्य दण्डधरस्य यमस्य यः

[1] सुभगः समयो. V. [2] उद्दण्ड. V.

कासरसार्वभौमः महिषश्रेष्ठः तस्य संनाहात् उद्यमात् भीतः; कासराणां स्ववाहनाश्वशत्रुत्वादिति भावः; 'महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः। चण्डमयूखमाली चण्डकिरणः सूर्यः। सद्यः सपदि। विवर्तित हयः—विवर्तिता निवर्तिता हया अश्वा येन सः। यमदिङ्मुखान्तात् दक्षिणदिगन्तात्। हिमभूधरसंमुखीनां हिमाचलाभिमुखीम्; वसन्ते सूर्यस्योत्तरगतेः प्रसिद्धत्वात्। यद्यपि "यथामुखसम्मुखस्य दर्शनः खः' इति खप्रत्ययः आदर्शादिरूपदर्शनाधिकरण एव संभवति, तथापि संमुखावस्थानमात्रेणादर्शादिसादृश्यादत्र यात्रायामौपचारिकः प्रयोगः, 'संयुगे संमुखीनं तम्' इति भट्टिप्रयोगवत्; 'संमुखीनमभिमुखम्' इति हेमचन्द्रश्च ॥ २ ॥

चन्द्रोदयोज्ज्वलमुखेन झषध्वजाज्ञां
व्याकुर्वता विमलसूक्ष्मतराम्बरेण।
वन्या वसन्तसमयेन परिग्रहत्व-
संभाविता सपदि पुष्पवती बभूव ॥ ३ ॥

व्या॥ चन्द्रेत्यादि। चन्द्रोदयोज्ज्वलमुखेन—चन्द्रोदयेन चन्द्रोदयवच्च उज्ज्वलं मुखं प्रारम्भः वदनं च यस्य तेन। झषध्वजाज्ञाम्—झषध्वजस्य मीनकेतोर्मदनस्य आज्ञां शासनम्। व्याकुर्वता विशदयता; अनुरागं वर्धयतेत्यर्थः। विमलसूक्ष्मतराम्बरेण—विमलं निर्मलं सूक्ष्मतरम् अतिसूक्ष्मम् अम्बरं गगनं वस्त्रं च यस्य तेन। वन्या वनसमूहः; 'वन्या वनसमूहे स्यात्' इत्यमरः। वसन्तसमयेन वसन्तकालेन, नायकेन चेति प्रतीयते। परिग्रहत्वसंभाविता—परिग्रहत्वेन स्वीकार्यत्वेन पत्नीत्वेन च संभाविता; 'पत्नीस्वीकारशपथमूल्येष्वपि परिग्रहः' इति वैजयन्ती। पुष्पवती पुष्पपूर्णा; भूम्नि मतुप्; अर्थान्तरं स्पष्टम्। श्लेषानुप्राणिता समासोक्तिरलंकारः ॥ ३ ॥

कालेन गाढतरमानपरिग्रहाणां
प्राणानिलान् र[1]सयितुं प्रमदाजनानाम् ।
उल्लासितेव रसना कुसुमद्रुमाणा-
मुल्लासते स्म नवकोमलपल्लवश्रीः ॥ ४ ॥

व्या ॥ कालेनेति । कालेन वसन्तकाल एव कालः मृत्युः तेन । गाढतरमानपरिग्रहाणाम्—गाढतरः दृढतरः मानपरिग्रहः ईर्ष्याकोपधारणं यासां तासाम् । रसयितुम् आस्वादयितुम् । प्रमदाजनानां कोपनयोषिताम् । उल्लासिता प्रकटिता । रसना जिह्वा; 'रसज्ञा रसना जिह्वा' इत्यमरः । कुसुमद्रुमाणाम्—कुसुमप्रधानाः द्रुमाः तेषाम् , शाकपार्थिवादिवत् मध्यमपदलोपी समासः ॥ ४ ॥

उन्मोचयन् परिणतच्छदकञ्चुलीका-
मुद्भावयन् मुकुलजालकरोमहर्षम् ।
उल्लोलयन् भ्रमरकेशभरं लताना-
मुद्यानभूषु विजहार वसन्तकालः ॥ ५ ॥

व्या ॥ उन्मोचयन्निति । उन्मोचयन् श्लथयन् । परिणतच्छदकञ्चुलीकाम्—परिणताः परिपक्वाः छदाः पर्णाः एव कञ्चुलीका कञ्चुकम् 'दलं पर्णं छदः पुमान्' इत्यमरः; 'चोलः कञ्चुलिका कूर्पासकोऽङ्गिका च कञ्चुके' इति हेमचन्द्रः । उद्भावयन् जनयन् । मुकुलजालकरोमहर्षम्—मुकुलजालकं कुड्मलसमूहमेव रोमहर्षं पुलकम् । उल्लोलयन् चालयन् । भ्रमरकेशभरम्—भ्रमरा भृङ्गा एव केशभरः कचकलापः तम् ॥ ५ ॥

आरुह्य मन्दमलयानिलमौपवाह्य-
माशाजयप्रचलितस्य मनोभवस्य ।

[1] प्रसयितुं. M.

सूनप्रसूतिरभवन्नवलाजवृष्टिः
पुंस्कोकिलध्वनिरभूद्वरशङ्खघोषः ॥ ६ ॥

व्या ॥ आरुह्येति । औपवाह्यं राजार्हवाहनम्; 'राजवाह्यस्त्वौपवाह्यः' इत्यमरः । आशाजयप्रचलितस्य दिग्जयप्रवृत्तस्य । सूनप्रसूतिः—सूनानां सुमानां प्रसूतिः च्युतिः; 'प्रसूतिः प्रसवे च्योते' इत्यमरः । पुंस्कोकिलध्वनिः—पुंसां कोकिलानां पिकानां ध्वनिः॥ ६ ॥

मन्दानिलेन वहता वनराजिमध्या-
दुत्थापितः कुसुमकोरकरेणुरुच्चैः ।
सेनापराग इव दिग्विजयोद्यतस्य
चेतोभुवः प्रसरति स्म दिगन्तरेषु ॥ ७ ॥

व्या ॥ मन्दानिलेनेति । वहता चरता । उत्थापितः उद्गमितः । कुसुमकोरकरेणुः—कुसुमानां कोरकाणां च रेणुः धूलिः । सेनापरागः सैन्यानां धूलिः ॥ ७ ॥

पुष्पायुधस्य नृपतेः परपुष्टवर्गः
संग्रामसंभ्रमसहान् सहकारबाणान् ।
संचेतुकाम इव संचितचारुपत्रान्
बभ्राम विभ्रमवनेषु नवाङ्कुरेषु ॥ ८ ॥

व्या ॥ पुष्पायुधस्येति । परपुष्टवर्गः—परपुष्टानां कोकिलानां समूहः; 'परपुष्टः परभृते' इति मेदिनी । संग्रामसंभ्रमसहान्—संग्रामे युद्धे यः संभ्रमः तस्य सहान्; अकुण्ठनानित्यर्थः । सहकारबाणान्—सहकारानेव चूतपुष्पाण्येव बाणान् । संचेतुकामः संपादयितुमनाः ।

---

[1] पुष्प. M. and P.

संचितचारुपत्रान्—संचितानि संपादितानि चारूणि मनोहराणि पत्राणि दलानि कङ्कादिपत्राणि च यैस्तान् । विभ्रमवनेषु उद्यानवनेषु ॥ ८ ॥

वीरेण मारसुभटेन विभिद्य बाणै-
र्बद्धा महाविटपिनां विटपान्तरेषु ।
व्याकीर्णकेशनिचया इव शत्रुमुण्डा[1]
व्यालोलभृङ्गनिवहाः स्तबका विरेजुः ॥ ९ ॥

व्या ॥ वीरेणेति । मारसुभटेन मार एव सुभटः युद्धवीरः तेन । महाविटपिनां महावृक्षाणाम् । विटपान्तरेषु शाखामध्येषु । व्याकीर्णकेशनिचयाः—व्याकीर्णः विश्लथः केशनिचयः कचसमूहः येषां ते । शत्रुमुण्डाः शत्रूणां मस्तकाः; 'मुण्डोऽस्त्री मस्तकोऽप्यस्त्री' इति वैजयन्ती । व्यालोलभृङ्गनिवहाः—व्यालोलः चलः भृङ्गनिवहः भ्रमरवर्गः येषु ते ॥ ९ ॥

भृङ्गाभिमुद्रितमुखा मकरन्दपूरैः
पूर्णोदरा रुरुचिरे सुमनोगुलुच्छाः ।
वीरस्य मारनृपतेर्विजयाभिषेकं
कालेन कर्तुमिव रत्नघटाः प्रणीताः ॥ १० ॥

व्या ॥ भृङ्गेत्यादि । भृङ्गाभिमुद्रितमुखाः—भृङ्गैः अभिमुद्रितानि लाञ्छितानि मुखानि येषां ते । रुरुचिरे बभासिरे । सुमनोगुलुच्छाः पुष्पस्तबकाः; 'गुच्छस्तबकगुत्सकाः । गुलुच्छोऽथ' इति हेमचन्द्रः । कालेन वसन्तकालेन । प्रणीताः सज्जीकृताः ॥ १० ॥

ओघीकृता मलयमारुतकन्दलेन
पुस्फोर पूगवननूतनपुष्पपालिः ।

---

[1] मुग्धा. C.

चेतोभवस्य नृपतेर्मधुना सलील-
मान्दोलिता ललितचामरमालिकेव ॥ ११ ॥

व्या ॥ ओघीकृतेति । ओघीकृता पुञ्जीकृता । मलयमारुतकन्दलेन दक्षिणवातनवाङ्कुरेण ; मन्दमारुतेनेति यावत् । पूगवननूतनपुष्पपालिः— पूगवनानां क्रमुकवनानां नूतनपुष्पपङ्क्तिः । मधुना वसन्तर्तुना । आन्दोलिता वीजिता । ललितचामरमालिका मनोहरचामरपङ्क्तिः ॥ ११ ॥

पुंस्कोकिलाः पुनरनङ्गजयापदान-
गाथासदृक्षकलपञ्चमकूजितानि ।
पेठुः प्रसन्नमधुरोज्ज्वलपेशलानि
प्रत्यग्रचूतकलिकासु वनस्थलीषु ॥ १२ ॥

व्या ॥ पुंस्कोकिला इति । पुंस्कोकिलाः पुमांसः पिकाः । अनङ्गजयापदानगाथासदृक्षकलपञ्चमकूजितानि—अनङ्गस्य मदनस्य जयापदानस्य जयरूपवृत्तकर्मणः गाथानां पद्यानां सदृक्षाणि तुल्यानि कलानि अव्यक्तमधुराणि पञ्चमकूजितानि पञ्चमनादान् । प्रसन्नमधुरोज्ज्वलपेशलानि—प्रसन्नानि स्वच्छानि मधुराणि श्रव्याणि उज्ज्वलानि गम्भीराणि पेशलानि श्लक्ष्णानि । प्रत्यग्रचूतकलिकासु—प्रत्यग्रा नवाः चूतकलिकाः आम्रकोरकाः यासु तासु; 'कलिका कोरकः पुमान्' इत्यमरः ॥ १२ ॥

उद्वेलसंभृतमधुव्रतदानराजि-
रुच्छृङ्खलो मलयमारुतगन्धहस्ती ।
मानग्रहाद्रिकटकेषु मनस्विनीनां
वप्रक्रियाविहृतिमाचरति स्म मन्दम् ॥ १३ ॥

व्या ॥ उद्वेलेत्यादि । उद्वेलसंभृतमधुव्रतदानराजिः— उद्वेलं भृशं यथा तथा संभृताः संगता मधुव्रता भृङ्गा एव दानराजिः मदरेखा

यस्य सः । उच्छृङ्खलः प्रतिबन्धरहितः । मलयमारुतगन्धहस्ती—मलयमारुत एव गन्धहस्ती मत्तगजः । मानग्रहाद्रिकटकेषु—मानग्रहस्य रोषपरिग्रहस्यैव अद्रेः कटकेषु पर्वतनितम्बेषु; 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । वप्रक्रियाविहृतिम् उत्खातकेलिम् । मानिनीनां मानग्रहं मलयमारुतोऽच्छिनदित्यर्थः ॥ १३ ॥

मन्दानिलक्षितिपमङ्गलपाठकानां
माकन्दगन्धगजमण्डनडिण्डिमानाम् ।
उद्दामकामविजयोत्सवघोषणाना-
मुज्जृम्भते स्म रुतमुन्मदषट्पदानाम् ॥ १४ ॥

व्या ॥ मन्देत्यादि । मन्दानिलक्षितिपमङ्गलपाठकानाम्—मन्दानिल एव क्षितिपः नृपः तस्य मङ्गलपाठकानां मङ्गलस्तुतिपाठकवन्दिभूतानाम् । माकन्दगन्धगजमण्डनडिण्डिमानाम्—माकन्दाः चूता एव गन्धगजा मत्तगजाः तेषां मण्डनडिण्डिमानामलङ्करणभूतडिण्डिमाख्यवाद्यविशेषाणाम् । गजानां पृष्ठेषु अलङ्काराय निक्षिप्ता डिण्डिमाख्या वाद्यविशेषाः मङ्गलार्थं ताड्यन्ते इति संप्रदायः । उद्दामकामविजयोत्सवघोषणानाम्—उद्दामस्य प्रौढस्य यः कामविजय एव उत्सवः तस्य घोषणानाम् उद्घोषकाणाम्; कर्तरि युच् ॥ १४ ॥

आमूलचूडमभितः प्रविजृम्भमाणो
बालप्रवालनिवहो वनपादपानाम्[1] ।
मानान्धकारहरणाय मनस्विनीनां
बालातपप्रसरविभ्रममाललम्बे ॥ १५ ॥

व्या ॥ आमूलचूडमिति । आमूलचूडम्—मूलं च चूडा च मूलचूडे, आ मूलचूडाभ्यामित्यव्ययीभावः; आमूलाग्रम् । मानान्धकारहरणाय—

[1] शोण॰ M.

मानं एवान्धकारः तमः तस्य निवारणाय । मनस्विनीनां मानिनीनाम् ' बालातपप्रसरविभ्रमम् — बालातपस्य प्रसरविभ्रमं प्रसरणविलासम्॥ १५ ॥

निरन्तरस्मेरमणीचकानां[1]
निष्यन्दमानाभिरनोकहानाम् ।
मधूलकासारमहानदीभि-[2]
र्वनं नदीमातृकतामयासीत् ॥ १६ ॥

व्या ॥ निरन्तरेत्यादि । निरन्तरस्मेरमणीचकानाम् — निरन्तराणि निबिडानि स्मेराणि विकचानि मणीचकानि पुष्पाणि येषां तेषाम्; 'मणीचकं प्रसूनं च सूनं सुमनसः स्त्रियः' इति वैजयन्ती । अनोकहानां वृक्षाणाम् । मधूलकासारमहानदीभिः — मधूलान्येव मधूलकानि मधूनि तेषाम् आसाराणां धारासंपातानां महानदीभिः ; 'मधूलं तु मधुर्न स्त्री' इति वैजयन्ती, 'धारासंपात आसारः' इत्यमरः । नदीमातृकतां नदीजलवर्धितसस्यादिकताम् ; 'स्यान्नदीमातृको देशो नद्यम्बुपाद्यसस्यकः' इति वैजयन्ती । उपजातिः ॥ १६ ॥

तटोपकण्ठे मकरन्दसिन्धोः
प्रसूनधूलीपुलिनाभिरामे ।
आबद्धचक्राः सह कामिनीभि-
रारेभिरे पातुमलिप्रवीराः ॥ १७ ॥

व्या ॥ तटेत्यादि । तटोपकण्ठे तीरसमीपे । मकरन्दसिन्धोः पुष्परसनद्याः । प्रसूनधूलीपुलिनाभिरामे — प्रसूनानां सुमानां धूलीभिः निर्मितैः पुलिनैः, अभिरामे । आबद्धचक्राः बद्धमण्डलाः । पातुम्, मधूनीति शेषः ॥ १७ ॥

---

[1] मनीचकानां. M., मनीवकानां. P. [2] मधूलिका. P. V. and C

वीरुन्मयीं विभ्रमयन्त्रडोला-
मारोप्य भृङ्गीमविगीतगीताम् ।
समीरणैरात्मगरुत्समुत्थैः
सानन्दमान्दोलयति स्म भृङ्गः ॥ १८ ॥

व्या ॥ वीरुन्मयीमिति । वीरुन्मयीं लतारूपाम्; ‘ लता प्रतानिनी वीरुत्’ इत्यमरः । विभ्रमयन्त्रडोलाम्—विभ्रमाय यन्त्र्यते इति यन्त्रां बद्धां डोलां प्रेङ्खोलिकाम् । अविगीतगीताम् अनवद्यगीताम् । आत्मगरुत्समुत्थैः स्वपक्षोत्थैः । आन्दोलयति स्म चालयति स्म ॥ १८ ॥

अशोकयष्ट्याः स्तवकोपनीत-
मादाय पुष्पासवमाननेन ।
संभोगखिन्नां तरुणद्विरेफः
सचाटुकं पाययति स्म कान्ताम् ॥ १९ ॥

व्या ॥ अशोकेत्यादि । अशोकयष्ट्याः अशोकलतायाः । स्तबकोपनीतम्—स्तबकेभ्यः गुच्छेभ्यः उपनीतं समाहृतम् । पुष्पासवं मकरन्दम् । संभोगखिन्नां रतिश्रान्ताम् । सचाटुकम्—प्रियवचनेन सहितं यथा तथा ॥ १९ ॥

अङ्कं समासाद्य लताङ्गनानां
षडङ्घ्रिडिम्भाः स्तबकस्तनेषु ।
प्रत्यग्रपुष्पासवदुग्धपानं
प्रपेदिरे विस्मृतलो[1]लभावाः ॥ २० ॥

व्या ॥ अङ्कमिति । लताङ्गनानाम्—लतानामेवाङ्गनानां स्त्रीणाम् । षडङ्घ्रिडिम्भाः भ्रमरशिशवः; ‘पोतः पाकोऽर्भको डिम्भः’ इत्यमरः ।

---

[1] लोक. P. V. and C.

स्तबकस्तनेषु—स्तबकेष्वेव स्तनेषु । प्रत्यग्रपुष्पासवदुग्धपानम्—प्रत्यग्राणां नूतनानां पुष्पासवानां मकरन्दानामेव दुग्धानां स्तन्यानां पानम् । विस्मृतलोलभावाः—विस्मृतः लोलभावः चाञ्चल्यं यैस्ते तथा भूताः सन्तः । भ्रमरशिशवः भ्रमरजातेः शैशवस्य च स्वभावसिद्धमपि चाञ्चल्यं परित्यज्य निश्चलाः सन्तः लतास्तबकेषु स्थितानि मधूनि अपिबन्नित्यर्थः ॥ २० ॥

अनेकसंग्रामविमर्दशीर्णां
पुराणमौर्वीमपनीय मारः ।
कोदण्डयष्टेर्मकरन्दयष्टे-
रपूर्वमौर्वीमकरोद् द्विरेफैः ॥ २१ ॥

व्या ॥ अनेकेत्यादि । अनेकसंग्रामविमर्दशीर्णाम्—अनेकसंग्रामेषु बहुयुद्धेषु विमर्देन संघर्षेण शीर्णां शिथिलाम् । पुराणमौर्वीं प्राचीनज्याम् । अपनीय त्यक्त्वा । मकरन्दयष्टेः कोदण्डयष्टेः—इक्षुदण्डरूपधनुर्लतायाः । अपूर्वमौर्वीं नवीनज्याम् । द्विरेफैः भ्रमरैः ॥ २१ ॥

अनन्ययोनेरपदानगाथां
मधोः सकाशादिव शिक्षयन्तः ।
शाखासु शाखासु महीरुहाणां
शनैः शिशिञ्जुः कलकण्ठशाबाः ॥ २२ ॥

व्या ॥ अनन्ययोनेरिति । अनन्ययोनेः मदनस्य । अपदानगाथां निर्वृत्तकर्मप्रतिपादकं पद्यम् । मधोः वसन्तस्य । शिशिञ्जुः दध्वनुः । कलकण्ठशाबाः कोकिलशिशवः ॥ २२ ॥

उत्क्षिप्तशाखाच्छलबाहुदण्डा-
श्चूतद्रुमाः शूर्पकशासनाज्ञाम् ।

---

[1] श्चल. C.

कर्णाभिरामैः कलकण्ठनादै-
रुद्घोषयामासुरिवाध्वगानाम् ॥ २३ ॥

व्या ॥ उत्क्षिप्तेत्यादि । उत्क्षिप्तशाखाच्छलबाहुदण्डाः—उत्क्षिप्ताः ऊर्ध्वं प्रसारिताः शाखा विटपा इति छलं व्याजः येषां ते बाहुदण्डा भुजदण्डा येषां ते । शूर्पकशासनाज्ञाम्—शूर्पकशासनस्य मदनस्य आज्ञां शासनम् । कर्णाभिरामैः श्रोत्रसुखकरैः । कलकण्ठनादैः पिकध्वनिभिः । उद्घोषयामासुः उच्चैः शब्दैः प्रकटीचक्रुः । अध्वगानाम्—अध्वानं नित्यं गच्छन्तीति अध्वगाः पथिकाः तेषाम् ॥ २३ ॥

विनेतुकामस्य विलासिनीनां
मानद्विपेन्द्रं मकरध्वजस्य ।
हेमाङ्कुशानामवहन्नभिख्या-
मग्रे [1]नताः प्रौढपलाशकोशाः ॥ २४ ॥

व्या ॥ विनेतुकामस्येति । विनेतुकामस्य शिक्षितुकामस्य । विलासिनीनां मानिनीनाम् । मानद्विपेन्द्रम्—मान ईर्ष्याकोप एव द्विपेन्द्रः गजश्रेष्ठः तम् । हेमाङ्कुशानां सुवर्णमयसृणीनाम्; 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इत्यमरः । अभिख्यां शोभाम्; 'अभिख्या नामशोभयोः' इत्यमरः । अग्र अग्रभागे । नताः वक्राः । प्रौढपलाशकोशाः—प्रौढाः परिणताः पलाशकोशाः पलाशमुकुलानि ॥ २४ ॥

परिभ्रमत्षट्पदकर्बुराणां
पङ्क्तिः पलाशद्रुममञ्जरीणाम् ।
देदीप्यमानस्य शिखावलस्य
दीप्तिं ययौ दर्शितधूमराशेः ॥ २५ ॥

व्या ॥ परिभ्रमदित्यादि । परिभ्रमत्षट्पदकर्बुराणाम्—परिभ्रमद्भिः परितो भ्रमद्भिः षट्पदैः भ्रमरैः कर्बुराणां शबलवर्णानाम्; 'शबलैताश्च

[1] अग्रे तनाः. M. and P.

कर्बुरे' इत्यमरः। पलाशद्रुममञ्जरीणां किंशुकस्तबकानाम्। देदीप्यमानस्य अतिशयेन ज्वलतः। शिखावलस्य वह्नेः; शिखा अस्त्यस्य शिखावलः; 'दन्तशिखात् संज्ञायाम्' इति वलच्प्रत्ययः। दर्शितधूमराशेः—दर्शितः धूमराशिः येन तस्य ॥ २५ ॥

आमोदलुब्धैरलिनां कदम्बै-
राकृष्यमाणः सुमनोगुलुच्छः।
ग्रासीकृतो राहुमुखेन राका-
कलानिधेर्बिम्ब इवाबभासे ॥ २६ ॥

व्या ॥ आमोदेत्यादि । आमोदलुब्धैः गन्धलोलुपैः । अलिनां भृङ्गाणाम्; 'मधुलिण्मधुपालिनः' इति वैजयन्ती। कदम्बैः वर्गैः। सुमनोगुलुच्छः पुष्पस्तबकः। ग्रासीकृतः कबलितः। राकाकलानिधेः पूर्णिमाचन्द्रस्य ॥ २६ ॥

तटीपटीरद्रुमसङ्गभाजां
सर्गासृपाणामिव साहचर्यात्[1]।
वियोगिनश्चन्दनशैलजन्मा
विमूर्छयामास मुहुः समीरः ॥ २७ ॥

व्या ॥ तटीत्यादि । तटीपटीरद्रुमसङ्गभाजाम्—तट्यां मलयाचलसानौ स्थितानां पटीरद्रुमाणां चन्दनवृक्षाणां सङ्गभाजां संसर्गं प्राप्नुवताम्। सरीसृपाणां सर्पाणाम्; 'चक्री व्यालः सरीसृपः' इत्यमरः। चन्दनशैलजन्मा मलयपर्वतजातः। विमूर्छयामास मोहयांचकार ॥ २७॥

मधुशीकरदुर्दिनान्धकारे
वनलक्ष्मीरतिदूतिकोपनीताम्।

---

[1] साहचर्यम्. P. and C.

भ्रमरीमभिसृत्वरीं प्रमत्तः
सचमत्कारमरीरमद् द्विरेफः ॥ २८ ॥

व्या ॥ मध्वित्यादि । मधुशीकरदुर्दिनान्धकारे—मधुशीकराणां मधुकणानां दुर्दिनान्धकारे वर्षान्धकारे । वनलक्ष्मीरतिदूतिकोपनीताम्—वनलक्ष्मीरेव रतिदूतिका चेटी तयोपनीतां समीपं प्रापिताम् । अभिसृत्वरीम् अभिसरणशीलाम् । प्रमत्तः मत्तः । सचमत्कारं हेलासहितम् । अरीरमत् रमयति स्म । द्विरेफः भ्रमरः । वृत्तं वैतालीयम् ॥ २८ ॥

वकुलद्रुमवाटिका वरस्त्री-
मुखगण्डूषमधुद्रवाभिषेकम् ।
अनुभूय नवाङ्कुरापदेशा-
दवहन्नञ्चितरोमहर्षशोभाम् ॥ २९ ॥

व्या ॥ वकुलेत्यादि । वकुलद्रुमवाटिकाः केसरवृक्षपङ्क्तयः । वरस्त्रीमुखगण्डूषमधुद्रवाभिषेकम् —वरस्त्रीणाम् उत्तमनारीणां मुखस्य यः गण्डूषमधुद्रवः मुखपूरितमद्यस्रवः तेनाभिषेकं सेचनम् । नवाङ्कुरापदेशात् नवाङ्कुरव्याजेन । अञ्चितरोमहर्षशोभाम्—अञ्चितां प्राप्तां रोमहर्षस्य पुलकस्य शोभाम् ॥ २९ ॥

सहकारवनीषु संचरन्त्या
मधुलक्ष्म्या इव नूपुरप्रणादाः ।
कलकण्ठभुवः कलप्रलापाः
श्रवसः पारणमादधुर्जनानाम् ॥ ३० ॥

व्या ॥ सहकारेत्यादि । सहकारवनीषु आम्राटवीषु । मधुलक्ष्म्याः वसन्तलक्ष्म्याः । नूपुरप्रणादाः मञ्जीरशब्दाः ; ‘मञ्जीरो नूपुरोऽस्त्रियाम्’

इत्यमरः । कलकण्ठभुवः पिकजाः । कलप्रलापाः अव्यक्तमधुरालापाः । श्रवसः श्रोत्रस्य; 'श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । पारणम् उपोषित-भोजनम्, तृप्तिमिति यावत् ॥ ३० ॥

अङ्गनावदनपद्मपूरणी-
मादरेण परिपीय वारुणीम् ।
उद्ववाम पुनरेव केसरः
स्यन्दमानमकरन्दकैतवात् ॥ ३१ ॥

व्या ॥ अङ्गनेत्यादि । अङ्गनावदनपद्मपूरणीम्—अङ्गनानां स्त्रीणां वदनपद्मानां वदनाब्जानां पूरणीम्, गण्डूषरूपामित्यर्थः । वारुणीं मद्यम् । उद्ववाम उदगिरत् । केसरः वकुलवृक्षः । स्यन्दमानमकरन्दकैतवात्—स्यन्दमानस्य स्रवतः मकरन्दस्य पुष्परसस्य व्याजात् । रथोद्धता वृत्तम्, 'रात्परैर्नरलगै रथोद्धता' इति लक्षणात् ॥ ३१ ॥

परिमललहरीषु पादपानां
भरितसमस्तदिगन्तरा[1]पगासु ।
जलविहरणमाचचार दीर्घं
मलयमहीधरमन्दगन्धवाहः ॥ ३२ ॥

व्या ॥ परिमलेत्यादि । परिमललहरीषु गन्धप्रवाहेषु । पादपानां वृक्षाणाम् । भरितसमस्तदिगन्तरापगासु—भरिताः पूरिताः समस्तानां दिशामन्तराण्येव आपगाः नद्यः याभिस्ताः, समस्तदिग्व्याप्तास्वित्यर्थः । जलविहरणं जलक्रीडाम् । मलयमहीधरमन्दगन्धवाहः—मलयमहीधरस्य मलयाद्रेः मन्दगन्धवाहः मन्दवातः । पुष्पिताग्रा वृत्तमेतत्, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ३२ ॥

---

[1] रासु गाढम्. M.

[1]मनोभवो मण्डलितास्त्रमौर्विका-
गभीरविष्फारविरावितास्त्ररम् ।
अशेषसांसारिकशेमुषीमुषो
ववर्ष चूताङ्कुरशातसायकान् ॥ ३३ ॥

व्या ॥ मनोभव इति । मनोभवः मदनः । मण्डलितास्त्रमौर्विका-गभीरविष्फारविरावितास्त्ररम्—मण्डलितं मण्डलीकृतं यदस्त्रं धनुः तस्य मौर्विकायाः ज्यायाः गभीरेण विष्फारेण टङ्कारेण ; 'विष्फारो धनुषां स्वानः' इत्यमरः; विरावितं मुखरितम् अम्बरं गगनं यस्मिन् कर्मणि तदिति क्रियाविशेषणम् । अशेषसांसारिकशेमुषीमुषः अशेषाणां सांसारिकाणां संसारबद्धानां शेमुषीमुषः मत्यपहारकान्, भ्रामकानित्यर्थः । चूताङ्कुरशातसायकान्—चूताङ्कुराः चूतकलिका एव शाताः तीक्ष्णाः सायकाः तान् । वंशस्थवृत्तम् ॥ ३३ ॥

इति प्रवृत्ते मधुमासवैभवे
विधातुमुद्यानविहारमुत्सुकः ।
रथं समारुह्य न[2]रेन्द्रनन्दनः
सहावरोधेन विनिर्जगाम सः ॥ ३४ ॥

व्या ॥ इतीति । मधुमासवैभवे वसन्तमाहात्म्ये; 'मधुश्चैत्रर्तुदैत्येषु' इति हेमचन्द्रः । उद्यानविहारम् आरामक्रीडाम् । अवरोधेन अन्तःपुरेण ; 'शुद्धान्तश्चावरोधश्च' इत्यमरः ॥ ३४ ॥

ततः कुमारस्यपुरन्दरश्रियः
प्रबोधकालोऽयमिति प्रबो[3]धितुम् ।

---

[1] मनोभुवो. C. M. and P. [2] च राजनन्दनः. P. [3] वेदितुम्. P. C.

क्रमेण वृद्धातुरलु[1]प्तजीवितान्
प्रदर्शयामासुरमुष्य देवताः ॥ ३५ ॥

व्या ॥ तत इति । पुरन्दरश्रियः इन्द्रतेजसः । प्रबोधकालः ज्ञानविर्भाव-कालः । प्रबोधितुं निवेदयितुम् ; अन्तर्भावितण्यर्थो भौवादिकोऽयम् । वृद्धातुरलुप्तजीवितान्—वृद्धाः जरठाः, आतुराः व्याधिपीडिताः, लुप्तजीविताः गतजीविताः तान् । एतान् दृष्ट्वा जरारोगाक्रान्तानि अनित्यानि च शरीराणीति बुध्यताम् इति तान् दर्शयामासुरित्यर्थः ॥ ३५ ॥

क्रमेण पश्यन् पुरतः स्थितानमून्
नितान्तमुद्विग्नमना नृपात्मजः ।
किमेतदित्याहितविभ्रमः स्व[2]यं
पुरोगतान् पर्यनुयुङ्क्त सारथीन् ॥ ३६ ॥

व्या ॥ क्रमेणेति । अमून् वृद्धातुरलुप्तजीवितान् । नितान्तं भृशम् ; 'तीव्रैकान्तनितान्तानि' इत्यमरः । उद्विग्नमनाः—उद्विग्नं निर्विण्णं मनः यस्य सः । आहितविभ्रमः धृतसंभ्रमः । पुरोगतान् पुरः स्थितान् । पर्यनुयुङ्क्त पर्यपृच्छत् ; आगमशास्त्रस्यानित्यत्वात् अडागमाभावः ॥ ३६ ॥

सविस्तरं तेऽपि सुरैरधिष्ठिता
नरेन्द्रपुत्रस्य विरक्तिकारणम् ।
क्रमेण तेषामतिमात्रदुःसहं
जराविकारादिकमाचचक्षिरे ॥ ३७ ॥

व्या ॥ सविस्तरमिति । सविस्तरं सप्रपञ्चम् । अधिष्ठिताः आविष्टाः । विरक्तिकारणं वैराग्यहेतुम् । तेषां जरठरुग्णलुप्तजीवितानाम् । अति-

[1] लुब्ध. C.  [2] स्त्वयं. M

मात्रदुस्सहम् अतिदुस्सहम् । जराविकारादिकम्—जरा वार्धकं विकारः रोगः एतौ आदी यस्य तत्; 'विकारो विकृतौ रुजि' इति मेदिनी। आचचक्षिरे ऊचुः ॥ ३७ ॥

निशम्य तेषां वचनं नृपात्मजो
निकामनिर्वेदविभाविताशयः ।
नियन्त्रितोद्यानविहारकौतुको
निवर्तयाश्वानिति सूतमब्रवीत् ॥ ३८ ॥

व्या ॥ निशम्येति । तेषां सारथीनाम् । निकामनिर्वेदविभाविताशयः—निकामं भृशं निर्वेदेन विरक्त्या विभावितः संस्कृतः आशयः अभिसन्धिः यस्य सः । नियन्त्रितोद्यानविहारकौतुकः—नियन्त्रितं प्रतिबद्धम् उद्यानविहारे आरामविहारे कौतुकं यस्य सः । सूतं सारथिम्; 'सूतः क्षत्ता च सारथिः' इत्यमरः ॥ ३८ ॥

अनन्तरं तस्य पुरः सुराधिपै-
रदर्शि शान्तानुशयस्तपोधन[1]ः ।
विवृद्धकारुण्यसमुद्रवीचिका-
विटङ्कविश्रान्तविशाललोचनः ॥ ३९ ॥

व्या ॥ अनन्तरमिति । अनन्तरम् अश्वनिवर्तननिदेशानन्तरम् । तस्य कुमारस्य । पुरः अग्रभागे । सुराधिपैः देवश्रेष्ठैः । अदर्शि अदर्श्यत, ण्यन्तात् कर्मणि लुङ् । शान्तानुशयः प्रशान्तद्वेषः; 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः । विवृद्धकारुण्यसमुद्रवीचिकाविटङ्कविश्रान्तविशाललोचनः—विवृद्धायाः कारुण्यस्यैव समुद्रस्य वीचिकायाः

---

[1] तपोधनैः. C. V.

ऊर्मेः विटङ्के कपोतपालिकायां विश्रान्ते व्याप्ते विशाले लोचने नेत्रे यस्य सः; 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः, करुणा-परिपूर्ण इत्यर्थः ॥ ३९ ॥

प्रतप्तचामीकरगौरविग्रहः
प्रवालभङ्गारुणचारुचीवरः ।
प्रसन्नपूर्णेन्दुनिभाननद्युतिः
प्रभूतमैत्रीपरिवाहिताशयः ॥ ४० ॥

व्या ॥ प्रतप्तेत्यादि । प्रतप्तचामीकरगौरविग्रहः—प्रतप्तं द्रुतं यत् चामीकरं तद्वत् गौरः पीतलोहितः विग्रहः देहः यस्य सः; 'शरीरं वर्ष्म विग्रहः', 'पीतो गौरो हरिद्राभः' इति चामरः । प्रवालभङ्गारुणचारु-चीवरः—प्रवालभङ्गः विद्रुमखण्ड इव अरुणं चारु मनोहरं चीवरं वल्कलं यस्य सः । प्रसन्नपूर्णेन्दुनिभाननद्युतिः—प्रसन्नस्य पूर्णस्य च इन्दोः सदृशी आननद्युतिः मुखकान्तिः यस्य सः । प्रभूतमैत्रीपरिवाहिताशयः—प्रभूतया अधिकया मैत्र्या स्नेहेन परिवाहितः तरङ्गितः आशयः यस्य सः; स्नेहपूरिताशय इत्यर्थः ॥ ४० ॥

तमेनमालोक्य च शाक्यनन्दन-
स्तपस्विनामग्रसरं सविस्मयः ।
क एष[1] का वास्य चरित्रचातुरी-
त्यपृच्छदभ्याशजुषः स्वसारथीन् ॥ ४१ ॥

व्या ॥ तमिति । तपस्विनाम्—तपः एषामस्तीति तपस्विनः तेषां यमिनाम् । चरित्रचातुरी चारित्रातिशयः । अभ्याशजुषः अभ्याशं समीपं जुषन्ते भजन्तीति तान्, संनिहितान् ॥ ४१ ॥

---

[1] एव. M.

अयं महाभाग विशुद्धमानसः
पवित्रशीलः परमार्थदेशिकः ।
सवासनोन्मूलितसर्वकिल्बिष-[1]
स्तपोधनः कश्चिदपश्चिमः सताम् ॥ ४२ ॥

व्या ॥ अयमिति । अयं पुरोवर्ती । हे महाभाग महात्मन् । विशुद्धमानसः—विशुद्धं रागद्वेषादिशून्यं मानसं यस्य सः । पवित्रशीलः पूतस्वभावः; 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । परमार्थदेशिकः तत्त्वोपदेष्टा । सवासनोन्मूलितसर्वकिल्बिषः—सवासनं संस्कारसहितं यथा तथा उन्मूलितानि नाशितानि सर्वाणि किल्बिषाणि येन सः; 'पापकिल्बिषकल्मषम्' इत्यमरः । अपश्चिमः अचरमः; प्रधान इत्यर्थः ॥ ४२ ॥

अमुष्य यः शासनमाश्रितो[2] जनो
जराविकारादितरङ्गभङ्गुरम् ।
क्रमेण निस्तीर्य स जन्मसागरं
प्रयाति निर्वाणपदं निरुत्तरम् ॥ ४३ ॥

व्या ॥ अमुष्येति । अमुष्य तपस्विनः । शासनम् उपदेशम् । जराविकारादितरङ्गभङ्गुरम्—जराविकारादय एव तरङ्गा यस्मिन् तादृशं भङ्गुरं नश्वरं च । निस्तीर्य तीर्त्वा । जन्मसागरं भवाम्बुधिम् । निर्वाणपदं कैवल्यस्थानम् । निरुत्तरम् अनुत्तरं श्रेष्ठमिति यावत् ॥ ४३ ॥

इति प्रवीराः क्षितिपालनन्दन-
प्रबोधनार्थं विबुधानुभावतः ।

---

[1] नोन्मीलित. P.

[2] मादृतो. P., माहृतं. V.

वितेनिरे वाङ्मनसाति[1]गोचरं
तपोनिधेस्तस्य चरित्रवर्णनम् ॥ ४४ ॥

व्या ॥ इतीति । प्रबोधनार्थम् उपदेशार्थम् । विबुधानुभावतः स्वाविष्टदेवताप्रभावात् । वाङ्मनसातिगोचरम्– वाक् च मनश्च वाङ्मनसे, गोचरमतिक्रान्तमतिगोचरम्, वाङ्मनसयोरतिगोचरं वाङ्मनसातिगोचरम्; वाचा वक्तुं मनसा स्मर्तुं चाशक्यमिति भावः ॥ ४४ ॥

इत्थं श्रुत्वा सारथीनां वचस्त-
ल्लब्धोपायः संसृतेर्निष्क्रमाय ।
संतुष्टान्तर्मानसो राजसूनु-
र्भूयोऽप्यैच्छत्कर्तुमुद्यानलीलाम् ॥ ४५ ॥

इति बुद्धघोषविरचिते पद्यचूडामणिनाम्नि महाकाव्ये षष्ठः सर्गः ॥

व्या ॥ इत्थमिति । तत् ऋषिचरित्रवर्णनरूपम् । लब्धोपायः लब्धसाधनः । निष्क्रमाय प्रव्रजनाय । संतुष्टान्तर्मानसः—सन्तुष्टम् अन्तर्मानसम् अन्तःकरणं यस्य सः ॥ शालिनी वृत्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ ४५ ॥

॥ इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां षष्ठः सर्गः ॥

---

[1] पिगोचार. P., मनसो विगोचरं. M., मनसोऽतिगोचरं. V.

श्रीः ॥

सप्तमः सर्गः

प्रचोदिताश्वः पुनरेव सूतैः
प्रतोदहस्तैर्नरलोकवीरः[1] ।
आखण्डलोद्यानमनोऽभिराम-
मारामम्त्यद्भुतमाससाद ॥ १ ॥

व्या ॥ अथ युग्मकेनोद्यानप्रवेशमाह—प्रचोदितेत्यादि । प्रचोदिताश्वः—प्रचोदिताः प्रेरिता अश्वा यस्य सः । प्रतोदहस्तैः—प्रतोदाः तोत्राणि हस्तेषु येषां तैः; 'प्रतोदः प्राजनं तोत्रम्' इति वैजयन्ती । आखण्डलोद्यानमनोऽभिरामम्—आखण्डलस्य इन्द्रस्य उद्यानं नन्दनमिव मनोऽभिरामं चारु । उपजातिर्वृत्तम् ॥ १ ॥

विद्यागृहं पञ्चमपाठकानां
विकल्पतूणीरमनन्ययोनेः ।
गञ्जागृहं षट्पदकामिनीनां
क्रीडागृहं किंच वसन्तलक्ष्म्याः ॥ २ ॥

व्या ॥ विद्यागृहमिति । विद्यागृहं विद्याशाला । पञ्चमपाठकानां पञ्चमस्वराध्येतॄणां पिकानाम् । विकल्पतूणीरं पर्यायशरधिम्; मदनसायकपुष्पाशयत्वात् तन्निषङ्गत्वेनोल्लेखः । अनन्ययोनेः मन्मथस्य । गञ्जागृहं मदिरालयः; 'गञ्जा तु मदिरागृहम्' इत्यमरः । षट्पदकामिनीनां भ्रमराङ्गनानाम् । उल्लेखालंकारः; 'बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते । एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ॥' इति लक्षणात् ॥ २ ॥

---

[1] वीर्यैः. M and P.

चराचराणामभिवन्दनीय-
मागन्तुमुद्यानमहीरुहस्तम् ।
मरुद्वशादानमितैः शिरोभि-
र्बद्धप्रवालाञ्जलयः प्रणेमुः ॥ ३ ॥

व्या ॥ चरेत्यादि । चराचराणां जङ्गमस्थावराणाम् । आगन्तुम् अतिथिम्; 'स्यादावेशिक आगन्तुः' इत्यमरः । उद्यानमहीरुहः आरामवृक्षाः । मरुद्वशात् वाय्वधीनत्वात्; 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति वैजयन्ती । बद्धप्रवालाञ्जलयः—बद्धाः प्रवाला एव अञ्जलयः यैस्ते ॥ ३ ॥

परागसंपत्तिसकतावकीर्णे[1]
पर्युक्षिते[2] पुष्परसैः पतद्भिः ।
कृतोपहारे गलितैः प्रसूनै-
रुद्यानमध्ये विजहार वीरः ॥ ४ ॥

व्या ॥ परागेत्यादि । परागसंपत्तिसकतावकीर्णे—परागाणां रजसां संपद्भिः समृद्धिभिरेव सिकताभिः अवकीर्णे व्याप्ते । पर्युक्षिते सिक्ते । पुष्परसैः मकरन्दैः; 'मकरन्दः पुष्परसः' इत्यमरः । कृतोपहारे दत्तप्राभृते । महात्मनस्तस्य आरामप्रवेशे प्रयत्नमन्तरेणैव राजोपचारः समभूदिति भावः ॥ ४ ॥

लताङ्गहारैर्ललितालिगीतै-
र्वनप्रियामञ्जुरवैश्च वाद्यैः ।
आरामभूमिं स विलोक्य मेने
सङ्गीतशालामिव शम्बरारेः ॥ ५ ॥

---

[1] विकीर्णे M. [2] पर्यु. M.

व्या ॥ लतेत्यादि । लताङ्गहारैः—लतानाम् अङ्गहारैः नाट्याङ्गभूताङ्गविक्षेपैः; 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः । ललितालिगीतैः—ललितैः मनोज्ञैः अलीनां भृङ्गानां गीतैः । वनप्रियामञ्जुरवैः—वनप्रियानां कोकिलानां मञ्जुरवैः मञ्जुलध्वनिरूपैः; 'वनप्रियः परभृतः कोकिलः' इत्यमरः । वाद्यैः वाद्यघोषैः । शम्बरारेः मारस्य; 'शम्बरारिर्मनसिजः' इत्यमरः ॥ ५ ॥

तरुप्रसूना[1]न्यपचेतुकामा
वामालका मन्दपदं चरन्त्यः ।
कुमारसेवार्थमुप[2]स्थितानां
शङ्कां वितेनुस्तरुदेवतानाम् ॥ ६ ॥

व्या ॥ तर्वित्यादि । तरुप्रसूनानि वृक्षपुष्पाणि । अपचेतुकामाः अपचेतुमिच्छन्तः । वामालकाः कुटिलकुन्तलाः सुन्दर्यः । मन्दानि पदानि पदविन्यासा यस्मिन् कर्मणि तत् । तरुदेवतानां तत्तद्वृक्षाधिष्ठातृदेवतानाम् ॥ ६ ॥

आलापमारामविहारिणीना-
माकर्णयन्तो हरिणेक्षणानाम् ।
विलज्जमाना इव बद्धमौना-
स्तस्थुः क्षणं तत्र वसन्तघोषाः ॥ ७ ॥

व्या ॥ आलापमिति । आलापं संलापम; 'स्यादाभाषणमालापः' इत्यमरः । आरामविहारिणीनाम्—उद्याने क्रीडन्तीनाम् । हरिणेक्षणानां मृगदृशाम् । बद्धमौनाः वाचंयमाः । वसन्तघोषाः—वसन्ते घोषः येषां ते; पिका इत्यर्थः ॥ ७ ॥

---

[1] सूतान्य. V. [2] मुपागतानां.

मञ्जीरनादच्छलतो ममार्तिं
न सुभ्रु कुर्या[1] इति नाथतेव ।
प[2]देन पङ्करुहकोमलेन
पस्पर्श काचिच्छनकैरशोकम् ॥ ८ ॥

व्या ॥ मञ्जीरेत्यादि । मञ्जीरनादच्छलतः नूपुरध्वनिव्याजेन । आर्तिं पीडाम् । हे सुभ्रु—शोभने भ्रुवौ यस्यास्तस्याः सम्बुद्धिः ; 'ऊकारादप्यूङ् प्रवृत्तेः' इति वामनवचनात् भ्रूशब्दादूङि नदीह्रस्वः। नाथता प्रार्थयता; 'आशिषि नाथः' इति नाथतेराशिष्येवात्मनेपद-नियमादात्मनेपदाभावः । पङ्करुहकोमलेन पद्मवन्मृदुलेन । शनकैः मन्दम्, अन्यथा पदकृतस्वार्तिपरिहारप्रार्थनावैयर्थ्यात् ॥ ८ ॥

अशोकयष्टिस्तरुणीजनस्य
पादाम्बुजस्पर्शमिवासहिष्णुः ।
नवप्रवालप्रसवापदेशात्
कोपानलज्वालमिवोत्ससर्ज ॥ ९ ॥

व्या ॥ अशोकेत्यादि । अशोकयष्टिः अशोकलता । असहिष्णुः असंहनशीलः । नवप्रवालप्रसवापदेशात्—नवप्रवालानां नूतनपल्लवानां प्रसवस्योत्पत्तेः अपदेशात् व्याजात्; तरुणीपादताडनेनाशोकानां पल्लवितत्वं दोहदशास्त्रे प्रसिद्धम् । कोपानलज्वालम्—कोपानलस्य कोपाग्नेः ज्वालं शिखाम्; 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः ॥ ९ ॥

सुधामरीचिद्युतिशीतलेन
कराम्बुजस्पर्शसुखेन काचित् ।
उद्भिद्यमानाङ्कुररोमहर्षं
पुंनागतां प्रापयति स्म चूतम् ॥ १० ॥

---

[1] कुर्यादिति. M and P.    [2] पादेन. M and P.

व्या ॥ सुधेत्यादि । सुधामरीचिद्युतिशीतलेन—सुधामरीचेः चन्द्रस्य द्युतिरिव शीतलं तेन । कराम्बुजस्पर्शसुखेन—कराम्बुजस्य स्पर्शेन जातं यत् सुखं तेन । उद्भिद्यमानाङ्कुररोमहर्षम्—उद्भिद्यमानाः उद्गच्छन्तः अङ्कुरा एव रोमहर्षः रोमाञ्चः यस्मात् तम् । पुंनागतां पुंनागवृक्षत्वम्, पुरुषश्रेष्ठत्वं च । चूतस्य पुंनागतानवनरूपविरोधस्य युवतिजनकरस्पर्शजन्यरोमाञ्चोद्गमस्य पुरुषश्रेष्ठलक्षणत्वेन हेतुना पुरुषश्रेष्ठताकथनेन परिहाराद्विरोधाभासालंकारः ॥ १० ॥

असूत सद्यः सहकारशाखी
नवाङ्कुरान् पुङ्खितचारुपत्रान् ।
अनन्ययोनेरभिमानहेतू-
नरुंतुदान्[1] पान्थवधूजनानाम् ॥ ११ ॥

व्या ॥ असूतेति । सहकारशाखी चूतवृक्षः । नवाङ्कुरान् नूतनप्ररोहान् । पुङ्खितचारुपत्रान्—पुङ्खितानि आयोजितानि चारूणि पत्राणि दलान्येव पत्राणि कङ्कपत्राणि येषां तान्; 'पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः' इति विश्वः । अभिमानहेतून् गर्वहेतून्; 'गर्वोऽभिमानोऽहंकारः' इत्यमरः । अरुंतुदान् मर्मस्पृशः; 'अरुंतुदं तु मर्मस्पृक्' इत्यमरः । पान्थवधूजनानां पथिकस्त्रीणाम्, विरहिणीनामित्यर्थः ॥ ११ ॥

सौगन्धिकेन्दीवरवासितेन
सलीलमन्तर्मुखसंभृतेन ।
पुराणमाध्वीकरसेन काचि-
दशोकतां केसरमानिनाय ॥ १२ ॥

---

[1] बाणान् बहून्. M.

व्या ॥ सौगन्धिकेत्यादि । सौगन्धिकेन्दीवरवासितेन—सौगन्धिकेन्दीवराभ्यां कल्हारोत्पलाभ्यां वासितेन सुरभितेन । अन्तर्मुखसंभृतेन—मुखस्यान्तः अन्तर्मुखम्, तत्र संभृतेन संपादितेन । पुराणमाध्वीकरसेन—पुराणेन पुरातनेन माध्वीकरसेन मद्येन । अशोकताम् अशोकवृक्षत्वामिति विरोधः, शोकरहिततामिति परिहारः । केसरं वकुलवृक्षम् ॥ १२ ॥

मनोज्ञगन्धैर्वकुलद्रुमाणां
स्वयं विकीर्णैः सुमनोनिकायैः ।
लताप्रतानेन विचित्रमेका
संकल्पयामास विकल्पकाञ्चीम् ॥ १३ ॥

व्या ॥ मनोज्ञेत्यादि । स्वयं विकीर्णैः—स्वतः पतितैः । सुमनोनिकायैः पुष्पराशिभिः ; संबद्धेन इति शेषः । लताप्रतानेन वल्लीतन्तुना । संकल्पयामास निर्ममे । विकल्पकाञ्चीं पर्यायरशनाम् ॥ १३ ॥

उपाहृतैः काञ्चनपुष्पजालै-
रुदारगन्धैर्नवमालिकायाः ।
आपूरयन्ती निजकेशपाश-
मनङ्गतूणीरमिवाबबन्ध ॥ १४ ॥

व्या ॥ उपाहृतैरिति । उपाहृतैः आनीतैः । काञ्चनपुष्पजालैः स्वर्णमयपुष्पराशिभिः । उदारगन्धैः महागन्धैः । नवमालिकायाः सुगन्धायाः ; 'सुगन्धा ग्रैष्मिकाताना मालिका नवमालिका' इति वैजयन्ती ।, निजकेशपाशं स्वीयकचकलापम् । अनङ्गतूणीरं मदनेषुधिम् ॥ १४ ॥

आवर्ज्य शाखां करपल्लवेन
प्रसह्य पुष्पापचयोन्मुखा[1]याः ।
रुषेव कस्याश्चिदशोकयष्टि-
स्तिरस्करोति स्म दृशं परागैः ॥ १५ ॥

व्या ॥ आवर्ज्येति । आवर्ज्य अवनमय्य । प्रसह्य हठात् । पुष्पापचयोन्मुखायाः—पुष्पाणामपचयाय शाखाभ्यो ग्रहणाय उन्मुखायाः ऊर्ध्वमुखायाः । रुषा कोपेन ; 'कोपक्रोधामर्षरोषप्रतिघा रुट्-क्रुधौ स्त्रियाम' इत्यमरः । तिरस्करोति स्म आच्छादयत् । परागैः पुष्पधूलिभिः ॥ १५ ॥

करेण साकं मम कोमलेन
स्पर्धामिदं किं परुषं भजेत ।
इत्यात्तरोषेव सलीलमेका
चूतप्रवालस्य चकार भङ्गम् ॥ १६ ॥

व्या ॥ करेणेति । स्पर्धां पराभिभवेच्छाम् । इदं चूतप्रवालम् । परुषं कठिनम् । आत्तरोषा प्राप्तकोपा । भङ्गं पराजयं छेदनं च ; 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योः' इति हैमः ॥ १६ ॥

सिन्दूरसौन्दर्यसहोदरेण
शेफालिकापुष्परजःकणेन ।
चकार सख्याः सविलासमेका
फालस्थले चारु तमालपत्रम् ॥ १७ ॥

[1] मुखीनाम्, C. and मुखीयाम्. V.

व्या ॥ सिन्दूरेत्यादि । सिन्दूरसौन्दर्यसहोदरेण— सिन्दूरस्य सौन्दर्ये सहोदरः तेन ; सिन्दूरसदृशसौन्दर्येणेत्यर्थः । शेफालिकापुष्परजःकणेन—शेफालिकापुष्पाणां नीलसिन्धुवारकुसुमानां रजःकणेन । फालस्थले निटिलप्रदेशे । तमालपत्रं तिलकम् ; 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः ॥ १७ ॥

आकृष्य शाखाः सदयं लताना-
मालूय हस्तेन नवप्रवालम् ।
माणिक्यभूषामपसार्य कण्ठे
निवेशयामास पतिः परस्याः ॥ १८ ॥

व्या ॥ आकृष्येति । आकृष्य अवनमय्य । सदयम्—प्रियाभुजसादृश्येन दयया सहितम् । आलूय छित्वा । नवप्रवालं नवपल्लवम् । माणिक्यभूषां रत्नाभरणम् । अपसार्य अपनीय । निवेशयामास अर्पयामास ॥ १८ ॥

काचित् प्रगल्भा रमणस्य कर्णे
निवेशयन्ती किल कर्णपूरम् ।
आवेष्ट्य कण्ठं भुजबन्धनेन
कपोलकान्तिं परिचुम्बति स्म ॥ १९ ॥

व्या ॥ काचिदिति । प्रगल्भा प्रौढा ; प्रगल्भालक्षणमुक्तं साहित्यदर्पणे—स्मरान्धा गाढतारुण्या समस्तरतकोविदा । भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ॥' इति । रमणस्य कान्तस्य । निवेशयन्ती किल निक्षिपन्तीव; किलेत्यलीके । कर्णपूरं पुष्पनिर्मितं कर्णाभरणम्; 'कर्णपूरस्तु पुष्पाद्यैः' इति वैजयन्ती । आवेष्ट्य आलिङ्ग्य । कपोलकान्तिं गण्डश्रियम्; कान्तिमत् कपोलमिति यावत् ॥ १९ ॥

नवप्रसूनैः सकलाङ्गनद्धै-
मनोहराः काश्चन वारिजाक्ष्यः ।
अयुग्मबाणायुधदेवताना-
माविष्कृतानामवहन्नभिख्याम् ॥ २० ॥

व्या ॥ नवेत्यादि । सकलाङ्गनद्धैः—सर्वावयवेषु धृतैः । अयुग्मबाणायुधदेवतानाम्—अयुग्मबाणस्य मदनस्य आयुधानां पुष्परूपास्त्राणां या देवता अधिष्ठातृदेवताः तासाम् । आविष्कृतानां मूर्तिमतीनाम् । अभिख्यां शोभाम् ॥ २० ॥

स्तनाभिरामस्तबकोज्ज्वलानां
दन्तच्छदापाटलपल्लवानाम् ।
मध्ये लतानां निभृतं वसन्तीं
सखीं विवेक्तुं न शशाक काचित् ॥ २१ ॥

व्या ॥ स्तनेत्यादि । स्तनाभिरामस्तबकोज्ज्वलानाम्—स्तनवदभिरामैः स्तबकैर्गुच्छैः उज्ज्वलानां शोभमानानाम् । दन्तच्छदापाटलपल्लवानाम्—दन्तच्छदवत् अधरोष्ठवत् आपाटला आरक्ताः पल्लवाः प्रवाला यासां तासाम्; 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी', इत्यमरः । निभृतं निश्चलम । विवेक्तुम्—इयं लता इयं सखीति विविच्य ज्ञातुम् ॥ २१ ॥

इत्थं कुमारस्य सहावरोधैः
सलीलमारामविहारभाजः ।
आलोकनायेव सहस्रभानु[1]-
राकाशमध्यं परमध्यरुक्षत् ॥ २२ ॥

---

[1] धाहुः. M. P. and O.

व्या ॥ इत्थमिति । अवरोधैः अन्तःपुरजनैः । आरामविहारभाजः—आरामविहारम् उद्यानक्रीडां भजतीति तस्य । सहस्रभानुः सूर्यः । अध्यरुक्षत् आरुरोह । मध्याह्नसमयः प्राप्त इति भावः ॥ २२ ॥

चण्डातपस्पर्शविवर्धमान-
मरीचिकावापिविहारदक्षः[1] ।
संधुक्षयंस्तापमतीव तासां
मध्याह्नशंसी मरुदाजगाम ॥ २३ ॥

व्या ॥ चण्डेत्यादि । चण्डातपस्पर्शविवर्धमानमरीचिकावापिविहारदक्षः—चण्डातपस्य सूर्यस्य स्पर्शेन विवर्धमानायां मरीचिकायां मृगतृष्णायामेव वाप्यां विहारे दक्षः; 'मृगतृष्णा मरीचिका' इत्यमरः । संधुक्षयन् वर्धयन् । तासाम् अन्तःपुरस्त्रीणाम् । मध्याह्नशंसी मध्याह्नसूचकः ॥ २३ ॥

छायास्तरूणामभितः प्रवृत्ता-
श्चण्डातपे क्षन्तुमिवासमर्थाः ।
मूलालवालं मुहुरम्बुसेक-
संजातशैत्यं शनकैरुपेयुः ॥ २४ ॥

व्या ॥ छाया इति । छायाः अनातपाः; 'छाया त्वनातपे कान्तौ' इत्यमरः । तरूणाम्, इदं छाया इत्यनेनान्वेति । अभितः समन्ततः । क्षन्तुं सोढुम् । मूलालवालम्—मूले यत् आलवालम् आवालं जलावापदेशः तम्; 'स्यादालवालमावालमावापः' इत्यमरः । अम्बुसेकसंजातशैत्यम्—अम्बुसेकेन जलसेचनेन संजातमुत्पन्नं शैत्यं यस्य तत् । वृक्षाणां छायास्तस्मिन् समये मूलमात्रमाश्रिता इति भावः ॥ २४ ॥

---

[1] दक्षम्. C. and V.

विहारसंजातपरिश्रमाणां
विलासिनीनाम[1]लिकस्थलीषु ।
प्रादुर्बभूवुः श्रमवारिलेशाः
प्रद्युम्नकीर्त्यङ्कुरनिर्विशेषाः ॥ २५ ॥

व्या ॥ विहारेत्यादि । विहारसंजातपरिश्रमाणाम्—विहारेण वनक्रीडया संजातः परिश्रमो यासां तासाम् । विलासिनीनां स्त्रीणाम् । अलिकस्थलीषु ललाटदेशेषु; 'ललाटमलिकं गोधिः' इत्यमरः । श्रमवारिलेशाः स्वेदकणाः । प्रद्युम्नकीर्त्यङ्कुरनिर्विशेषाः—प्रद्युम्नस्य मदनस्य कीर्त्यङ्कुरात् यशःप्ररोहात् निर्विशेषाः भेदशून्याः; तत्सदृशा इत्यर्थः । 'प्रद्युम्नो मीनकेतनः' इत्यमरः ॥ २५ ॥

घर्मोदबिन्दुप्रक[2]रा विरेजुः
कपोलपालीषु नितम्बिनीनाम् ।
स्नानार्थमानेतुममूः पुरस्तात्
तटाकदूता इव संप्रयाताः ॥ २६ ॥

व्या ॥ घर्मेत्यादि । घर्मोदबिन्दुप्रकराः—घर्मोदबिन्दूनां स्वेदजलकणानां प्रकराः संहतयः; 'प्रकरः कीर्णपुष्पादौ संहतौ' इति हेमचन्द्रः । कपोलपालीषु गण्डदेशेषु । नितम्बिनीनां सुन्दरीणाम् । अमूः अन्तःपुरस्त्रियः । तटाकदूताः—तटाकस्य सरसः दूताः सन्देशहराः; 'स्यात्सन्देशहरो दूतः' इत्यमरः । संप्रयाताः समायाताः ॥ २६ ॥

आराम भूमावतिवाह्य तापं
माध्याह्निकं मध्यमलोकपालः ।

---

[1] लक. P. [2] प्रसरा. M. P. and V.

आसेव्यमानो वरवर्णिनीभि-
रम्भोविहारार्थमवाप वापीम् ॥ २७ ॥

व्या ॥ आरामेत्यादि । अतिवाह्य नीत्वा । माध्याह्निकम्— मध्याह्ने भवम् । वरवर्णिनीभिः वनिताभिः; 'रामायां वरवर्णिनी' इति वैजयन्ती । अम्भोविहारार्थं जलक्रीडार्थं । वापीं दीर्घिकाम्; 'सरो वापी तु दीर्घिका' इत्यमरः ॥ २७ ॥

तामेव वापीं चतुर्भिः पद्यैर्विशिनष्टि—

मन्दानिलान्दोलितवीचिमाला-
डोलायमानोन्मदराजहंसीम् ।
सं[1]फुल्लकल्हारविजृम्भमाण-
सौरभ्यपूरप्लवमानभृङ्गीम् ॥ २८ ॥

व्या ॥ मन्दानिलेत्यादि । मन्दानिलान्दोलितवीचिमालाडोलायमानोन्मदराजहंसीम्—मन्दानिलेन मन्दमारुतेन आन्दोलितायां चालितायां वीचिमालायां तरङ्गमालायां डोलायमानाः डोला इवाचरन्त्यः चञ्चला उन्मदाः मत्ता राजहंस्यः यस्यां ताम् । संफुल्लकल्हारविजृम्भमाणसौरभ्यपूरप्लवमानभृङ्गीम्—संफुल्लेभ्यः विकचेभ्यः कल्हारेभ्यः सौगन्धिकपुष्पेभ्यः विजृम्भमाणे प्रवर्धमाने सौरभ्यपूरे गन्धप्रवाहे प्लवमानाः भृङ्ग्यः भ्रमरस्त्रियः यस्यां ताम् ॥ २८ ॥

कुमुद्वतीकोशपु[2]टावकी[3]र्ण-
माध्वीकधारामधुरप्रवाहाम् ।

---

[1] प्रफुल्ल. M. [2] पटा. C. and P. [3] कीर्ण. P.

उत्तुङ्गकल्लोलवितानरत्न-
रङ्गस्थलीचङ्क्रममाणमत्स्याम् ॥ २९ ॥

व्या ॥ कुमुद्वतीत्यादि । कुमुद्वतीकोशपुटावतीर्णमाध्वीकधारामधुरप्रवाहाम्—कुमुद्वत्याः कुमुदिन्याः कोशपुटेभ्यः कुड्मलपुटेभ्यः अवतीर्णाभिः अवरूढाभिः, स्यन्दमानाभिरित्यर्थः, माध्वीकधाराभिः मधुधाराभिः मधुराः प्रवाहाः यस्यां ताम् । उत्तुङ्गकल्लोलवितानरत्नरङ्गस्थलीचङ्क्रममाणमत्स्याम्—उत्तुङ्गानामुन्नतानां कल्लोलानां वितानो विस्तार एव रत्नरङ्गस्थली रत्ननिर्मिता नर्तनशाला तस्यां चङ्क्रममाणाः संचरन्तः, नृत्यन्तः इति यावत्, मत्स्याः यस्यां ताम्; 'क्रतुविस्तारयोरस्त्री वितानम्' इत्यमरः ॥ २९ ॥

एकत्र फुल्लैर्नवपुण्डरीकै-
र्गङ्गानुषक्ताम्[1]इव दृश्यमानाम् ।
रक्तारविन्दैरितरत्र भिन्नैः
शोणोपगूढामिव शोभमानाम् ॥ ३० ॥

व्या ॥ एकत्रेति । एकत्र क्वचित्प्रदेशे । फुल्लैः विकचैः । नवपुण्डरीकैः नूतनसिताम्भोजैः; 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । गङ्गानुषक्तां गङ्गासंबद्धाम् । रक्तारविन्दैः कोकनदैः । इतरत्र प्रदेशान्तरे । भिन्नैः फुल्लैः । शोणोपगूढाम्—शोणेन शोणाख्येन नदेन उपगूढां संगताम्; 'शोणो हिरण्यबाहुः स्यात्' इति नदविशेषे अमरः ॥ ३० ॥

पतत्रिपक्षप्रविकीर्णपद्म-
परागसिन्दूरितदिग्विभागाम् ।

---

[1] यातां परिदृश्य. M.

स शीकरासूत्रितदुर्दिनाभा-
मालोक्य वापीमधिकं ननन्द ॥ ३१ ॥

व्या ॥ पतत्रीत्यादि । पतत्रिपक्षप्रविकीर्णपद्मपरागसिन्दूरितदिग्विभागाम्—पतत्रिणां पक्षिणां पक्षैः गरुद्भिः प्रविकीर्णैः विक्षिप्तैः पद्मपरागैः पद्मरेणुभिः सिन्दूरिताः संजातसिन्दूराः दिग्विभागाः प्राच्यादिदिग्भेदाः यस्यां ताम्; 'परागः कौसुमे रेणौ' इत्यमरः। सः कुमारः । शीकरासूत्रितदुर्दिनाभाम्—शीकरैः जलबिन्दुभिः आसूत्रिता उत्पादिता दुर्दिनाभा वर्षश्रीर्यस्यास्ताम् ॥ ३१ ॥

दृढावबद्धायतकेशपाशैः
शृङ्गानुषङ्गोज्ज्वलपाणिपद्मैः ।
सहावरोधैः स विहारवापी-
मवातरत् पाशधरप्रभाव[1]ः ॥ ३२ ॥

व्या ॥ दृढेत्यादि । दृढावबद्धायतकेशपाशैः—दृढं यथा तथा अवबद्धाः संयता आयता दीर्घाः केशपाशाः कचकलापा यैस्तैः । शृङ्गानुषङ्गोज्ज्वलपाणिपद्मैः—शृङ्गाणां क्रीडाम्बुयन्त्राणाम् अनुषङ्गेण संबन्धेन उज्ज्वलानि पाणिपद्मानि येषां तैः; 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके' इत्यमरः । विहारवापीं क्रीडादीर्घिकाम् । पाशधरप्रभावः—पाशधरस्य वरुणस्य प्रभाव इव प्रभावो यस्य सः ॥ ३२ ॥

तत्पूर्वमभ्यागतमादरेण
तमूर्मिहस्तैः परिरभ्य वापी ।

---

[1] प्रभावात्. ए.

कर्णाभिरामैः कलहंसनादै-
वार्तानु[1]योगं मधुरं चकार ॥ ३३ ॥

व्या ॥ तत्पूर्वमिति । तत्पूर्वम्—तदेव पूर्वं प्रथमं यस्मिन् कर्मणि तत् इति आगमनक्रियाविशेषणम् । ऊर्मिहस्तैः—ऊर्मिभिः वीचिभिरेव हस्तैः बाहुभिः । परिरभ्य आलिङ्ग्य । कर्णाभिरामैः श्रवणानन्दकरैः । कलहंसनादैः कादम्बध्वनिभिः; 'कादम्बः कलहंसः स्यात्' इत्यमरः । वार्तानुयोगं वृत्तान्तप्रश्नम्; 'वार्ता प्रवृत्तिर्वृत्तान्तः', 'प्रश्नोऽनुयोगः पृच्छा च' इत्युभयत्रामरः ॥ ३३ ॥

अन्तर्विगाढे सति सुन्दरीभि-
रुद्वेलतां प्राप महातटाकः ।
जलाशयाः स्त्रीषु कृतानुषङ्गाः
कथं नु वेलां न विलङ्घयन्ति ॥ ३४ ॥

व्या ॥ अन्तरिति । अन्तः जलमध्ये । विगाढे प्रविष्टे । उद्वेलताम्—उद्गतो वेलां तीरं मर्यादां च उद्वेलः 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः; तस्य भावः तत्ता ताम्; 'वेला कूलेऽपि वारिधेः' इति विश्वः, 'वेला कालमर्यादयोरपि' इत्यमरश्च । जलाशयाः तटाकाः; डलयोरभेदात् जडाशया मन्दाश्च । कृतानुषङ्गाः—कृतः अनुषङ्गः संबन्धः यैस्ते । न विलङ्घयन्ति नातिक्रामन्ति । श्लेषानुप्राणितः अर्थान्तरन्यासोऽलंकारः ॥ ३४ ॥

कठोरकान्ताकुचमण्डलाना-
माघातभीता इव वेपमानाः ।
कल्लोलमालाः कणिकापदेशा-
न्मुक्तोपहारा[2]नुपनिन्युरासाम् ॥ ३५ ॥

[1] नियोगं. M. and P.   [2] निव. C. P. and V.

व्या ॥ कठोरेत्यादि । कठोरकान्ताकुचमण्डलानाम्—कठोराणि कठिनानि यानि कान्ताकुचमण्डलानि तेषाम् । अघातभीताः—आघातात् अभिघातात् भीताः । वेपमानाः कम्पमानाः । कल्लोलमालाः वीचिपरम्पराः । कणिकापदेशात्—कणिकानां बिन्दूनाम् अपदेशात् व्याजात् । मुक्तोपहारान् मुक्ताफलरूपाण्युपायनानि । तरङ्गशीर्णाः कणिकाः अवरोधस्त्रीणामङ्गेषु मुक्ताफलानीव विरेजुरिति भावः ॥ ३५ ॥

पद्माकरे पङ्कजलोचनाभि-
नरेन्द्रसूनुर्विजहार सार्धम् ।
सलीलमन्तःपुरिकाङ्गनाभिः
साकं प्रचेता इव वारिराशौ ॥ ३६ ॥

व्या ॥ पद्माकर इति । पद्माकरे सरसि । पङ्कजलोचनाभिः पद्मेक्षणाभिः सुन्दरीभिः । सार्धं सह । अन्तःपुरिकाङ्गनाभिः शुद्धान्तस्त्रीभिः । प्रचेताः वरुणः; 'प्रचेता वरुणः पाशी' इत्यमरः ॥ ३६ ॥

कान्ताकरोदञ्चितवारिधाराः
कान्तस्य बाह्वोरुपरि प्रकीर्णाः ।
अयत्नवालव्यजनोपचार
चातुर्यधुर्याः क्षणमात्रमासन् ॥ ३७ ॥

व्या ॥ कान्तेत्यादि । कान्ताकरोदञ्चितवारिधाराः—कान्तानां करैः उदञ्चिताः ऊर्ध्वं क्षिप्ता वारिधारा जलप्रवाहाः । बाह्वोरुपरि अंसप्रदेशे । प्रकीर्णा विक्षिप्ताः । अयत्नवालव्यजनोपचारचातुर्यधुर्याः—अयत्नस्य यत्नशून्यस्य वालव्यजनोपचारस्य चामरवीजनस्य चातुर्यस्य

धुरं वहन्तीति तादृशाः; 'चामरं वालव्यजनं रोमगुच्छः प्रकीर्णकम्' इति हेमचन्द्रः ॥ ३७ ॥

परिस्फुरच्छीकरदन्तुराङ्गं
पर्यायवल्गत्कुचकुम्भहारम् ।
काश्चित् करैः कान्तमिवापराद्ध-
मास्फालयामासुरमन्दमम्भः ॥ ३८ ॥

व्या ॥ परिस्फुरदित्यादि । परिस्फुरच्छीकरदन्तुराङ्गम् परिस्फुरद्भिः प्रकाशमानैः शीकरैः दन्तुराणि निम्नोन्नतानि अङ्गानि यस्मिन् कर्मणि तत्; 'दन्तुरं तून्नतानतम्' इत्यमरः । पर्यायवल्गत्कुचकुम्भहारम्—पर्यायेण क्रमेण वल्गन् लुठन् कुचकुम्भयोः हारो यस्मिन् कर्मणि तत् । अपराद्धं कृतापराधम् । आस्फालयामासुः ताडयामासुः ॥ ३८ ॥

तरङ्ग[1]रङ्गे सह भृङ्गगानैः
सरोरुहे ताण्डवमादधाने ।
हस्ताम्बुजैरात्तमृणालदण्डै-
रवादयन् वारिमृदङ्गमन्याः ॥ ३९ ॥[2]

व्या ॥ तरङ्गेत्यादि । तरङ्गरङ्गे तरङ्गरूपरङ्गस्थले । ताण्डवम् उद्धतनर्तनम् । आत्तमृणालदण्डैः—आत्ता गृहीता मृणालान्येव दण्डाः यैस्तैः । वारिमृदङ्गम्—जलरूपं वाद्यविशेषम् ॥ ३९ ॥

निमज्जनोन्मज्जनरागिणीभि-
र्नितम्बिनीभिर्निबि[3]डस्तटाकः ।

---

[1] ङ्गै. O.    [2] [illegible]    [3] निबिडं तटाकम्. O and V.

अशुम्भदम्भोनिधिरन्तरान्त-
रावि र्भवन्तीभिरिवाप्सरोभिः ॥ ४० ॥

व्या ॥ निमज्जनेत्यादि । निमज्जनोन्मज्जनरागिणीभिः—निमज्जने अवगाहे उन्मज्जने ऊर्ध्वनिर्गमने च रागिणीभिः लोलुपाभिः । नितम्बिनीभिः स्त्रीभिः । अशुम्भत् अशोभत । अन्तरान्तरा मध्ये मध्ये । आविर्भवन्तीभिः उद्गच्छन्तीभिः ॥ ४० ॥

क्रीडातटाकं क्षितिपालसूनुः
केयूरभोगीन्द्रवृतेन दोष्णा ।
ममन्थ भूभारधुरंधरेण
मन्थाद्रिणा सिन्धुमिवाब्जनाभः[1] ॥ ४१ ॥

व्या ॥ क्रीडेत्यादि । क्रीडातटाकं लीलासरः । केयूरभोगीन्द्रवृतेन—केयूरेण अङ्गदेनैव भोगीन्द्रेण सर्पराजेन वृतेन वेष्टितेन । दोष्णा बाहुना; 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । भूभारधुरंधरेण भूभारवाहिना । अब्जनाभः विष्णुः ॥ ४१ ॥

क्षोणीभुजा कुङ्कुमवारिधारा
यन्त्रप्रयुक्ता रमणीमुखेषु ।
पपात पङ्केरुहकाननेषु
प्रभेव भानोः प्रथमावतारा ॥ ४२ ॥

व्या ॥ क्षोणीत्यादि । क्षोणीभुजा नृपेण । कुङ्कुमवारिधारा—कुङ्कुममिश्रा जलधारा । यन्त्रप्रयुक्ता यन्त्रेण शृङ्गेण प्रयुक्ता विकीर्णा । प्रथमावतारा—प्रथमः अवतारः प्रवेशः यस्याः सा; प्रभातोदिता इत्यर्थः ॥ ४२ ॥

---

[1] नाभिः. C. and V.

वामभ्रुवस्तं मणिशृङ्गमुक्तै-
रवाकिरन् कुङ्कुमवारिपूरैः ।
तथागतः सोऽयमतीव रेजे
सपल्लवश्रीरिव पारिजातः ॥ ४३ ॥

व्या ॥ वामभ्रुव इति । वामभ्रुवः—वामे रमणीये भ्रुवौ यासां ताः सुन्दर्यः । मणिशृङ्गमुक्तैः मणिमयजलयन्त्रोत्थितैः । कुङ्कुमवारिपूरैः कुङ्कुमजलप्रवाहैः । तथागतः—तं प्रकारं प्राप्तः; तथा जलैः सिक्त इत्यर्थः । सोऽयं सिद्धार्थः । सपल्लवश्रीः पल्लवशोभासहितः ॥ ४३ ॥

कस्याश्चिदाविष्कृतचन्द्रिकायाः
कराब्जयन्त्रप्रहिताम्बुधारा ।
पपात पत्युर्मणिमौलिबन्धे
गङ्गेव देवस्य जटाकलापे ॥ ४४ ॥

व्या ॥ कस्याश्चिदिति । आविष्कृतचन्द्रिकायाः—आविष्कृता प्रकाशिता चन्द्रिका चन्द्रिकात्वेनाध्यवसितं स्मितं यया तस्याः । कराब्जयन्त्रप्रहिता—कराब्जे स्थितेन यन्त्रेण प्रहिता प्रेरिता । मणिमौलिबन्धे—मणिभूषितधम्मिल्लबन्धे; 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केऽलिमूर्धसु' इति हेमचन्द्रः । देवस्य रुद्रस्य । जटाकलापे कपर्दे ॥ ४४ ॥

स्वहस्तयन्त्रप्रहिताभिरद्भिः
पिधाय कस्याश्चन नेत्रयुग्मम् ।

विटः परस्या विनिमीलिताक्ष्या-
श्चुचुम्ब बिम्बाधरमादरेण ॥ ४५ ॥

व्या ॥ स्वेत्यादि । स्वहस्तयन्त्रप्रहिताभिः—स्वहस्ते निजकरे स्थितेन यन्त्रेण प्रहिताभिः । पिधाय आच्छाद्य । विनिमीलिताक्ष्याः मुकुलिताक्ष्याः ॥ ४९ ॥

कयाचिदभ्यर्णजुषः सलीलं
कान्तस्य कण्ठे प्रहिताम्बुधारा ।
चेतोभुवा चित्तमृगं ग्रहीतुं
व्यापारिता वागुरिकेव रेजे ॥ ४६ ॥

व्या ॥ कयाचिदिति । अभ्यर्णजुषः समीपं प्राप्तस्य । चेतोभुवा मारेण । चित्तमृगं मनोरूपहरिणम् । व्यापारिता विस्तारिता । वागुरिका मृगग्रहणार्थं रज्जुनिर्मितो जालविशेषः ; 'वागुरा मृगबन्धनी' इत्यमरः ॥ ४६ ॥

वक्त्रे मनोज्ञस्मितचन्द्रिकाभू-
द्वक्षोरुहे निर्झरकान्तिरासीत् ।
मध्ये बभूवाभ्रसरिद्विलासो
वामभ्रुवां मज्जनवारिधारा ॥ ४७ ॥

व्या ॥ वक्त्र इति । मनोज्ञस्मितचन्द्रिका—मनोज्ञा स्मितचन्द्रिका स्मितप्रभारूपा । वक्षोरुहे स्तने । निर्झरकान्तिः गिरिप्रवाहशोभारूपा । मध्ये वलग्ने । अभ्रसरिद्विलासः गङ्गाविलासरूपा । मज्जनवारिधारा—मज्जनेन जाता वारिधारा । अत्र वक्त्रवक्षोरुहमध्यानां चन्द्रशैलाकाशरूपत्वं व्यज्यते । उल्लेखालंकारः । लक्षणं तूक्तम् ॥ ४७ ॥

आप्लावयामास करोदकेन
वक्त्रं स कस्याश्चन मानवत्याः ।
तदेव तन्मानपरिग्रहस्य
जलाञ्जलिप्रक्रममाललम्बे ॥ ४८ ॥

व्या ॥ आप्लावयामासेति । आप्लावयामास सेचयामास । करोदकेन प्रसृतिगतजलेन । मानवत्याः मानिन्याः । तदेव करोदकसेचनमेव । तन्मानपरिग्रहस्य—तस्या मानपरिग्रहस्य रोषस्वीकरणस्य । जलाञ्जलिप्रक्रमं निवापाञ्जलिरीतिम्; 'प्रक्रमः क्रमेऽवसरे' इति मेदिनी । आललम्बे अङ्गीचकार । प्रियकरोदकसेचनसमकालमेव मानिन्या मानपरिग्रहो विनष्ट इति भावः ॥ ४८ ॥

निमज्ज्य कासांचिदुदञ्चितानां
वक्षोरुहाः प्रक्षरदम्बुधाराः ।
चकाशिरे चञ्चुपुटापकृष्ट-[1]
मृणालनाला इव चक्रवाकाः ॥ ४९ ॥

व्या ॥ निमज्ज्येति । निमज्ज्य अवगाह्य । उदञ्चितानाम् उन्मग्नानाम् । प्रक्षरदम्बुधाराः—प्रक्षरन्ती गलन्ती अम्बुधारा येभ्यस्ते । चञ्चुपुटापकृष्टमृणालनालाः—चञ्चुपुटेन त्रोटिपुटेन अपकृष्टा आकृष्टा मृणालनाला बिसदण्डा यैस्ते । चक्रवाकाः कोकपक्षिणः; 'कोकश्चक्रश्चक्रवाकः' इत्यमरः ॥ ४९ ॥

निराकृते कापि तरङ्गवातैः
स्तनोत्तरीये सति लज्जमाना ।

---

[1] पुटोपलक्ष्य., V. and M.; पुटोपकृष्ट. P.

कुचस्थलं नव्यनखव्रणाङ्कं
डिण्डीरपिण्डेन तिरश्चकार ॥ ९० ॥

व्या ॥ निराकृत इति । निराकृते अपनीते । कापि काचन । तरङ्गवातैः वीचिसमुत्थैर्वायुभिः । स्तनोत्तरीये स्तनाच्छादके संव्यान-पटे । नव्यनखव्रणाङ्कं नूतननखक्षतचिह्नितम् । डिण्डीरपिण्डेन फेन-खण्डेन; 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । तिरश्चकार आच्छादयामास ॥ ९० ॥

कस्याश्चिदन्तस्सलिले निमज्ज्य
समुच्चलन्त्याः सरसं मुखाब्जम् ।
समुज्जिहानस्य समुद्रमध्या-
त्तारापतेर्बिम्बमिवाबभासे ॥ ९१ ॥

व्या॥ कस्याश्चिदिति । अन्तस्सलिले—सलिले इति अन्तस्सलिले; विभक्त्यर्थे अव्ययीभावः, 'तृतीयासप्तम्योर्बहुलम्' इति अमभावः पाक्षिकः । समुच्चलन्त्याः बहिः विनिर्गच्छन्त्याः । समुज्जिहानस्य उद्गच्छतः तारापतेः नक्षत्राधिपस्य चन्द्रस्य । आबभासे प्रचकाशे ॥ ९१ ॥

अम्भोविहाराकुलितैः पयोभि
रपाकृतेष्वञ्जनमण्डनेषु ।
रोषादिवान्तःपुरसुन्दरीणां
नेत्रारविन्दान्यरुणीबभूवुः ॥ ९२ ॥

व्या ॥ अम्भ इत्यादि । अम्भोविहाराकुलितैः— अम्भोविहारेण जलक्रीडनेन आकुलितैः क्षोभितैः । अपाकृतेषु क्षालितेषु । अञ्जन-मण्डनेषु कज्जलरूपालंकारेषु । रोषात् स्वालङ्कृताञ्जनापहारजन्यात् कोपात् ॥ ९२ ॥

पयोधराः पङ्कजलोचनानां
पाथोविहारे पतदम्बुधाराः ।
नागेन्द्रकुम्भा इव नद्धहाराः
सनिर्झरौघा इव शैलशृङ्गाः ॥ ५३ ॥

व्या ॥ पयोधरा इति । पयोधराः कुचाः ; 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। पाथोविहारे—पाथसि जले विहारे क्रीडायाम् ; 'कबन्धमुदकं पाथः' इत्यमरः । पतदम्बुधाराः—पतन्ती अम्बुधारा येभ्यस्ते । नागेन्द्रकुम्भाः गजराजमस्तकप्रदेशाः । नद्धहाराः बद्धमुक्ताहाराः । सनिर्झरौघाः—निर्झरस्य प्रस्रवणस्यौघेन प्रवाहेण सह वर्तन्त इति तादृशाः ; 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः,' 'ओघोवृन्देऽम्भसां रये' इत्युभयत्रामरः । शैलशृङ्गाः पर्वतकूटाः ; 'क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः' इति वैजयन्ती ॥ ९३ ॥

अनङ्गसाम्राज्यमहाभिषेक-
कुम्भाविवाम्भोरुहलोचनायाः ।
वक्षोरुहौ मङ्गलशृ[1]ङ्गसंस्थै-
रवाकिरन् वारिभरैः परस्याः ॥ ९४ ॥

व्या ॥ अनङ्गेत्यादि । अनङ्गसाम्राज्यमहाभिषेककुम्भौ—अनङ्गस्य मदनस्य यः साम्राज्यमहाभिषेकः चक्रवर्तित्वज्ञापको महाभिषेकः तत्संबन्धिनौ कुम्भौ कलशौ । मङ्गलशृङ्गसंस्थैः मङ्गलकरक्रीडाम्बुयन्त्रस्थैः । अवाकिरन् व्याक्षिपन् ; अपूरयान्नित्यर्थः । काश्चित् इति शेषः ॥ ९४ ॥

[1] भृङ्ग. P.

विभूषणैर्विद्रुमपुष्य[1]राग-
वैडूर्यगारुत्मतपद्मरागैः ।
अ[2]ङ्गच्युतैरम्बुजलोचनानां
रत्नाकरोऽभूत्कमलाकरोऽपि ॥ ९९ ॥

व्या ॥ विभूषणैरिति । विभूषणैः अलंकारैः । विद्रुमपुष्यरागवैडूर्यगारुत्मतपद्मरागैः रत्नजातिभेदैः । अङ्गच्युतैः अङ्गेभ्यः जले पतितैः । रत्नाकरः समुद्रः, रत्नाश्रयश्च । कमलाकरः कमलसरः । विरोधाभासोऽलंकारः ॥ ९९ ॥

एवं स कृत्वा सरसीविहारं
सहावरोधैः सरसीरुहाक्षः ।
उत्तीर्य तस्यास्तटसंनिविष्टं
बद्धोपचारं सदनं विवेश ॥ ९६ ॥

व्या ॥ एवमिति । तटसंनिविष्टम्—तीरे निर्मितम् । बद्धोपचारं कृतोपचारम ; संनिहितराजोपचारमित्यर्थः । सदनं गृहम् ; 'निशान्तवस्त्यसदनभवनागारमन्दिरम्' इत्यमरः ॥ ९६ ॥

तत्रानुरक्तैः सह मित्रवर्गैः
संकल्पिताकल्पविकल्पवेषः ।
रसोत्तरव्यञ्जनपाकहृद्य-
माहारमार्यः परमभ्यनन्दत् ॥ ९७ ॥

व्या ॥ तत्रेति । तत्र तीरसंनिविष्टगृहे । अनुरक्तैः प्रेमयुतैः । मित्रवर्गैः सुहृद्गणैः । संकल्पिताकल्पविकल्पवेषः—सङ्कल्पिताः विर-

---

[1] पुष्प. P.    [2] अम्बु. P. C.

चिताः आकल्पविकल्पाः मण्डनभेदाः यस्मिन् तादृशो वेषो यस्य सः ; 'स्यादाकल्पस्तु मण्डने। कल्पने चापि' इति हेमचन्द्रः । रसोत्तरव्यञ्जनपाकहृद्यम्—रसेन समुचिततत्तद्रसेन उत्तरः श्रेष्ठः यः व्यञ्जनानां तेमनादीनां पाकः तेन हृद्यं हृदयप्रियम् ; 'व्यञ्जनं श्मश्रुचिह्नयोः। तेमनेऽवयवे कादौ' इति हेमचन्द्रः ॥ ५७ ॥

विचित्रपट्टास्तरणोपपन्नं
विकीर्णपुष्पप्रकरं कुमारः ।
अभ्यन्तरस्थापितभद्रपीठ-
मास्थानिकं मण्डपमध्यवात्सीत् ॥ ५८ ॥

व्या ॥ विचित्रेत्यादि । विचित्रपट्टास्तरणोपपन्नम्—विचित्रैः नानावर्णैः पट्टास्तरणैः कौशेयपरिस्तरणैः उपपन्नं युक्तम् । विकीर्णपुष्पप्रकरम्—विकीर्णः विक्षिप्तः पुष्पप्रकरः पुष्पराशिः यस्मिन् तम् । अभ्यन्तरस्थापितभद्रपीठम्—अभ्यन्तरे अन्तर्भागे स्थापितं प्रतिष्ठितं भद्रपीठं भद्रासनं यस्मिन् तम् । आस्थानिकं सभासंबन्धिनम् ॥ ५८ ॥

तत्र क्षोणीरमणतनयो मण्डपे वाणिनीनां[1]
नृत्तारम्भैर्निरुपमरसैर्वाद्यघोषैर्मनोज्ञैः ।
वीणानादैः श्रवणसुभगैर्वेणुना दैश्च[2] हृद्यैः
श्रीमानह्नास्त्रिभुवनगुरुः शेषमेष व्यनैषीत् ॥ ५९ ॥

इति बुद्धघोषविरचिते पद्यचूडामणिनाम्नि महाकाव्ये सप्तमः सर्गः ॥

---

[1] वाहिनीनां. P. [2] वाद्यैश्च. C.

व्या ॥ तत्रेति । तत्र मण्डपे । क्षोणीरमणतनयः राजकुमारः । वाणिनीनां नर्तकीनाम्; 'वाणिन्यौ नर्तकीदूत्यौ' इत्यमरः। नृत्तारम्भैः नाट्यप्रक्रमैः। निरुपमरसैः निरुपमा असदृशा रसाः शृङ्गारादयः येषु तैः। श्रवणसुभगैः श्रोत्रानन्दकरैः। वेणुनादैः सुषिरवाद्यध्वानिभिः। व्यनैषीत् यापयति स्म। मन्दाक्रान्ता वृत्तम्, 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तो गुरू च' इति लक्षणात् ॥ ९९ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां सप्तमः सर्गः ॥

---

श्रीः.

अष्टमः सर्गः.

तत्रान्तरे बिम्बममन्दरागं
पपात भानोर्दिशि पश्चिमायाम् ।
आकाशकोशाद्गलितस्य नीला-
दाकृष्टलीलं मणिदर्पणस्य ॥ १ ॥

व्या ॥ अथ पञ्चविंशत्या पद्यैः सूर्यास्तमयं वर्णयति—तत्रेति। तत्रान्तरे अह्नोऽवसाने। अमन्दरागम् अतिरक्तम्। पश्चिमायां चरमायाम्। आकाशकोशात् गगनरूपपिधानात्। आकृष्टलीलम्—आकृष्टा लीला येन तत्; प्राप्तशोभम्। मणिदर्पणस्य मणिमयमुकुरस्य ॥ १ ॥

आकाशसिन्धोरपराह्णकर्ण-
धाराधिपः संहृतरश्मिजालः ।
प्रक्षेपणीभिः स्फटिकात्मिकाभि-
र्दिगन्ततीरं तरणिं निनाय ॥ २ ॥

व्या ॥ आकाशेत्यादि । आकाशसिन्धोः—आकाश एव सिन्धुः समुद्रस्तस्य; 'उदन्वानुदधिः सिन्धुः' इत्यमरः। अपराह्णकर्णधाराधिपः—अपराह्णः सायंकाल एव कर्णधाराधिपः नाविकपतिः; 'कर्णधारस्तु नाविकः' इत्यमरः। संहृतरश्मिजालः—संहृतं संक्षिप्तं रश्मीनां सूर्यकिरणानामेव रश्मीनां रज्जूनां जालं समूहः येन सः। प्रक्षेपणीभिः नौकादण्डैः; 'नौकादण्डः क्षेपणी स्यात्' इत्यमरः। स्फटिकात्मिकाभिः सूर्यकान्ताशिलारूपाभिः; 'स्फटिकोऽर्को रविग्रावा सूर्यकान्तोऽनलोपलः' इति वैजयन्ती। तरणिं सूर्यमेव नावम्; 'द्युमणौ तरणिः पुंसि कुमारीनौकयोस्त्रिषु' इति त्रिकाण्डशेषः ॥ २ ॥

अशोकपुष्पस्तबकाभिताम्र-
मस्ताचले मण्डलमुष्णभानोः ।
बभार सिन्धोर्मथने विषक्त-
प्रवालवल्लीवलयस्य शोभाम् ॥ ३ ॥

व्या ॥ अशोकेत्यादि । अशोकपुष्पस्तबकाभिताम्रम्—अशोकवृक्षस्य पुष्पस्तबक इव पुष्पगुच्छ इवाभिताम्रमतिरक्तम् । उष्णभानोः सूर्यस्य । विषक्तप्रवालवल्लीवलयस्य—विषक्तस्य लग्नस्य प्रवालवल्लीवलयस्य विद्रुमलतामण्डलस्य ॥ ३ ॥

भास्वानभीप्सुः परलोकयात्रां
पद्माकरेषु प्रतिबिम्बलक्षात् ।
आप्रच्छनार्थं प्रियबान्धवाना-
मम्भोजिनीनामिव संप्रविष्टः ॥ ४ ॥

व्या ॥ भास्वानिति । अभीप्सुः अभ्याप्तुं प्राप्तुमिच्छुः । परलोकयात्रां देशान्तरगमनम् । पद्माकरेषु पद्मसरःसु । प्रतिबिम्बलक्षात् प्रतिबिम्बव्याजात्; 'लक्षं व्याजशरव्ययोः' इति हेमचन्द्रः । आप्रच्छनार्थम्—आलिङ्गनकुशलप्रश्नादिना सभाजनार्थम्; 'आनन्दनसभाजने । आप्रच्छनम्' इत्यमरः । अम्भोजिनीनाम् अम्भोजसमूहानाम्; 'खलादिभ्य इनिर्वक्तव्यः' इति समूहार्थे इनिप्रत्यये ङीप् ॥ ४ ॥

क्रमेण मध्यं चरमम्बुराशेः
प्राभाकरं बिम्बमलंचकार ।
हरिन्मणिश्याममिवाच्युतस्य
वक्षःस्थलं कौस्तुभनाम रत्नम् ॥ ५ ॥

व्या ॥ क्रमेणेति । चरमाम्बुराशेः पश्चिमसमुद्रस्य । प्राभाकरम्—प्रभाकरस्य सूर्यस्य संबन्धि ; तस्येदमित्यण्प्रत्ययः । बिम्बं मण्डलम् ; 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । हरिन्मणिश्यामम्—हरिन्मणिवत् नीलरत्नवत् श्यामं श्यामवर्णम् । अच्युतस्य विष्णोः । कौस्तुभनाम—कौस्तुभ इति नाम आख्या यस्य तत् ॥ ५ ॥

आवर्तवेगादपराम्बुराशे-
राव्टत्त[1]बिम्बं हरिदश्वबिम्बम् ।
भूयोऽपि चक्रभ्रमम[2]न्मृजार्थ-
मारोपितं विश्वसृजेव रेजे ॥ ६ ॥

व्या ॥ आवर्तेत्यादि । आवर्तवेगात्—आवर्तस्य जलभ्रमस्य वेगात् ; 'आवर्तः पयसां भ्रमः' इति वैजयन्ती । अपराम्बुराशेः पश्चिमसमुद्रस्य । आवृत्तबिम्बम्—आवृत्तं भ्राम्यत् बिम्बं प्रतिबिम्बं यस्य तत् ; 'बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले' इति हैमः । हरिदश्वबिम्बम्—हरितो नीलाः अश्वाः यस्य सः हरिदश्वः सूर्यः ; 'द्युमणिर्हरिदश्वोऽद्रिः' इति वैजयन्ती, तस्य बिम्बं मण्डलम् । चक्रभ्रमम्—चक्रस्य शाणचक्रस्य भ्रमं भ्रमणम् ; भ्राम्यच्चक्रमित्यर्थः । उन्मृजार्थम् उत्तेजनार्थम् । विश्वसृजा त्वष्ट्रा ॥ ६ ॥

मया विमाब्धि[3]ः प्रलयप्रस[4]ङ्गं
वेला कदाचिन्न विलङ्घितेति ।
सत्यं चकारेव तरङ्गहस्तै-
रादाय तप्तारुणलोहकूटम् ॥ ७ ॥

[1] रावर्तमानं. C. and P. [2] मार्जनार्थं. C. and P. [3] विनासीत्. V. [4] प्रसङ्गे. P.

व्या ॥ मयेति । मया समुद्रेण । प्रलयप्रसङ्गं विना—प्रलयकालसंबन्धं वर्जयित्वा । कदाचित् कदापि । वेला तीरं मर्यादा च । सत्यं शपथम्; 'सत्यं शपथतथ्ययोः' इत्यमरः । तरङ्गहस्तैः—तरङ्गाः वीचय एव हस्ताः तैः । तप्तारुणलोहकूटम्—तप्तम् अरुणं रक्तवर्णं सूर्यमेव लोहकूटम् अयःपिण्डम्; 'अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्' इत्यमरः ॥ ७ ॥

दिनावसानेन परीक्षकेण
मन्दप्रदीप्तिर्द्युमणि[1]र्महार्हः[1] ।
और्वाग्निना तेजयितुं किलान्त-
रुदन्वदङ्गार[2]भरे निरस्तः ॥ ८ ॥

व्या ॥ दिनेत्यादि । दिनावसानेन परीक्षकेण—सायंकालरूपस्वर्णपरीक्षकेण । मन्दप्रदीप्तिः मन्दकान्तिः । द्युमणिः सूर्यः । महार्हः—महामूल्यः । और्वाग्निना बाडबाग्निना । तेजयितुम् प्रकाशयितुम् । किलेति इवार्थे । अन्तः अन्तर्भागे; स्थितेनेति शेषः, और्वाग्निनेत्यस्य विशेषणम् । उदन्वदङ्गारभरे—उदन्वान् समुद्र एव अङ्गाराणां निरग्नीनां दग्धकाष्ठानां भरः समूहः तस्मिन् । निरस्तः क्षिप्तः ॥ ८ ॥

अस्तं गते भर्तरि भृङ्गमाला-
मङ्गल्यसूत्रं दिवसान्तधात्री ।
अम्भोजिनीनामपसौरभाणा-
मपाकरोदम्बुरुहोपकण्ठात् ॥ ९ ॥

व्या ॥ अस्तामिति । अस्तं गते—अस्तमिते नष्टे च । भर्तरि प्रिये सूर्ये । भृङ्गमालामङ्गल्यसूत्रम्—भ्रमरपङ्क्तिरूपमङ्गल्यतन्तुम् । दिव-

---

[1] महार्हम्. C. [2] भरे. C.

सान्तधात्री सन्ध्यारूपोपमाता। अपसौरभाणां गन्धहीनानाम्, कुङ्कुम-रहितानाम्; मृतभर्तृकाणामित्यर्थः 'सौरभं घुसृणं च तत्' इति त्रिकाण्डशेषः। अम्बुरुहोपकण्ठात् पद्मरूपकण्ठसमीपात् पद्मसमीपाच्च॥ ९॥

विश्लेषदुःखादिव तिग्मभानोः
संकोचभाजां नलिनीवधूनाम्।
शोकाग्निधूमालिरिवोज्जजृम्भे
भृङ्गावली पङ्करुहाननेभ्यः॥ १०॥

व्या॥ विश्लेषेत्यादि। विश्लेषदुःखात् वियोगव्यसनात्। तिग्मभानोः सूर्यस्य। संकोचभाजां मुकुलीभावं प्राप्तानाम्। शोकाग्निधूमालिः—शोकाग्नेर्धूमपरम्परा। पङ्करुहाननेभ्यः—पङ्करुहाण्येवाननानि तेभ्यः॥ १०॥

सौरभ्यलोभात् सविधे चरन्ती
भृङ्गावली पद्मवनेषु रेजे।
वियोगिनीभिर्नलिनीवधूभि-
र्व्यापारितोद्बन्धनवागुरेव॥ ११॥

व्या॥ सौरभ्येत्यादि। सौरभ्यलोभात् सुगन्धतृष्णया। सविधे समीपे। वियोगिनीभिः विरहिणीभिः। नलिनीवधूभिः—नलिनीभिः पद्मिनीभिरेव वधूभिः। व्यापारिता सज्जीकृता। उद्बन्धनवागुरा—उद्बन्धनाय मरणसाधनीभूतगलोर्ध्वबन्धनाय कल्पिता वागुरा जालम्॥ ११॥

विहाय भास्वान् नलिनीं सरागा-
मस्तं गतोऽभून्मम बाल्य[1]मित्रम्।
इत्यार्तियोगादिव चक्रवाक-
स्त्यक्त्वा प्रियां दीनतरं ररास॥ १२॥

---

[1] बालु· M. and P.

व्या ॥ विहायेति । सरागाम्---रक्तवर्णसहिताम्, अनुरक्तां च। मम चक्रवाकस्य । बाल्यमित्रम्---बाल्यात्प्रभृति मित्रम्। आर्तियोगात् सुहृद्विरहदुःखसंबन्धात्। ररास चुक्रोश ॥ १२ ॥

प्रतायमाना[1] प्रथमेतरस्मिन्
काष्ठान्तराले कनति स्म सन्ध्या ।
दिवानिशान्योऽन्यनिपीडनेन
जाज्वल्यमाना ज्वलनप्रभेव ॥ १३ ॥

व्या ॥ प्रतायमानेति। प्रतायमाना विस्तीर्यमाणा । प्रथमेतरस्मिन्—प्रथमात्पूर्वादितरस्मिन् पश्चिमे। काष्ठान्तराले दिगभ्यन्तरे; 'दिशस्तु ककुभः काष्ठाः', 'अभ्यन्तरं त्वन्तरालम्' इति चामरः । कनति स्म बभासे । दिवानिशान्योऽन्यनिपीडनेन – दिवा च निशा च तयोः अन्योऽन्यनिपीडनेन परस्परसंमर्देन । जाज्वल्यमाना—अत्यन्तं ज्वलन्ती । ज्वलनप्रभा वह्निद्युतिः; 'कृपीटयोनिर्ज्वलनः' इत्यमरः ॥ १३ ॥

अस्तं गतं भास्कर[2]मम्बरश्री-
रालोक्य शोकातिशयाकुलेव ।
नक्षत्रमुक्ताक्षवटं दधाना
सन्ध्यातपं चीवरमाललम्बे ॥ १४ ॥

व्या ॥ अस्तमिति । अस्तं गतम् अस्तमितम् । अम्बरश्रीः आकाशलक्ष्मीः । शोकातिशयाकुला शोकातिशयेन दुःखातिशयेनाकुला व्याकुला । नक्षत्रमुक्ताक्षवटम्—नक्षत्राणामेव मुक्ताक्षाणां मुक्तामयानामक्षाणां वटं सूत्रम्; 'गुणो वराटो रज्जुः स्त्री न ना शुल्बा

---

[1] प्रतायमाने. M. and P.

[2] भास्वर. M. and P.

वटी त्रयी' इति वैजयन्ती । चीवरं वल्कलम् । आललम्बे. शिश्रिये ॥ १४ ॥

रुद्राक्षमालावलयोज्ज्वलानि
तपोधनानां करपल्लवानि ।
सन्ध्याप्रणामाय सभृङ्गचक्रैः
संकोचमापुः सह पद्मषण्डैः ॥ १५ ॥

व्या ॥ रुद्राक्षेत्यादि । रुद्राक्षमालावलयोज्ज्वलानि—रुद्राक्षमालानां वलयेन मण्डलेन उज्ज्वलानि दीप्राणि । सन्ध्याप्रणामाय सन्ध्यानमस्काराय । सभृङ्गचक्रैः भृङ्गसमूहसहितैः । पद्मषण्डैः पद्मसमूहैः । सहोक्तिरलंकारः ; 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात् ॥ १५ ॥

आकाशनीलोत्पलभृङ्गभङ्गि-
राशावधूनीलपटोत्तरीयम् ।
विश्वंभराभू[1]मिगृहप्रवेशो
ऽप्यजृम्भतान्धंकरणी तमिस्रा ॥ १६ ॥

व्या ॥ आकाशेत्यादि । आकाशनीलोत्पलभृङ्गभङ्गिः—आकाशस्यैव नीलोत्पलस्य भृङ्गभङ्गिः भृङ्गश्रीः । आशावधूनीलपटोत्तरीयम्—आशानां दिशामेव वधूनां नीलपटोत्तरीयं नीलवर्णसंव्यानवस्त्रम् । विश्वंभराभूमिगृहप्रवेशः—विश्वंभरायाः भूमेः भूमिगृहं भूमेरन्तर्भागे निर्मितं तमोव्याप्तं गृहं तद्रूपः प्रवेशः प्रवेशस्थानम्; विश्वंभराच्छादकत्वसाम्यात् तमसः भूमिगृहत्वेनोल्लेखः । अन्धंकरणी अन्धं कुर्वती; अनन्धमन्धं क्रियते अनयेत्यर्थे 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु

[1] भूरि. M.

च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति करणे ख्युनि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि 'नञ्स्नञीककख्युंस्तरुणतलुनानामुपसंख्यानम्' इति ख्युनन्तत्वात् ङीप्। तमिस्रा गाढं तमः; 'तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसे न ना' इति वैजयन्ती ॥ १६ ॥

निष्यन्दमानैरिव चन्द्रकान्तै-
निर्वापितानां तपनोपलानाम्।
समीरणोत्था इव धूमसार्था-
स्तमोभरास्तस्तरुरन्तरिक्षम् ॥ १७ ॥

व्या ॥ निष्यन्दमानैरिति। निष्यन्दमानैः स्रवद्भिः। निर्वापितानां शमितानाम्; निरग्नीकृतानामित्यर्थः। तपनोपलानां सूर्यकान्तशिलानाम्। समीरणोत्थाः—वायुना उद्गताः। धूमसार्थाः धूमराशयः। तस्तरुः आवव्रुः ॥ १७ ॥

प्रदोषवेधाः[1] प्रवरस्य तारा-
प्रशस्तिवर्णान् लिखितुं हिमांशोः।
पयोदवीथीफलकं तमिस्र-
मषीप्रकारैर्मलिनीचकार[2] ॥ १८ ॥

व्या ॥ प्रदोषेत्यादि। प्रदोषवेधाः—प्रदोषः सायंकाल एव वेधाः कलाभिज्ञः 'वेधसो विष्णुधातृज्ञाः' इति वैजयन्ती। प्रवरस्य श्रेष्ठस्य। ताराप्रशस्तिवर्णान्—ताराः नक्षत्ररूपान् प्रशस्तिवर्णान् प्रशंसाव्यञ्जकाक्षराणि। लिखितुमिति संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः कथञ्चित्साधनीयः। पयोदवीथीफलकम्—पयोदवीथीम् आकाशमेव फलकम्। तमिस्रमषीप्रकारैः अन्धकाररूपमषीभेदैः ॥ १८ ॥

---

[1] वेधः. C. and P.

[2] विकारै. M.

शर्वस्य सन्ध्याधृतताण्डवस्य
कण्ठप्रभापुञ्ज इवान्धकारः ।
ज्वलिष्यतामोषधिपादपानां
किंचारुणोद्गम इवान्तरिक्षम् ॥ १९ ॥

व्या ॥ शर्वस्येति । शर्वस्य रुद्रस्य । सन्ध्याधृतताण्डवस्य—सन्ध्यायां धृतं ताण्डवं नर्तनं येन तस्य । कण्ठप्रभापुञ्जः गलकान्तिसमूहः; 'राशिपुञ्जोत्करा नरि' इति वैजयन्ती । ओषधिपादपानां ज्योतिर्लतानाम् ॥ १९ ॥

आवव्रुराकाशमतिप्रभूता
[1]आशान्तपर्यस्ततमःसमूहाः ।
कूलंकषाः प्रावृषि वारिराशिं
कलिन्दपुत्र्या इव वारिपूराः ॥ २० ॥

व्या ॥ आवव्रुरिति । अतिप्रभूताः अभ्यधिकाः । आशान्तपर्यस्ततमःसमूहाः—आशान्ते दिगन्ते पर्यस्ताः व्याप्ताः तमसाम् अन्धकाराणां समूहाः । कूलंकषाः तीरद्वयव्यापिनः ; कूले कषतीति विग्रहे 'सर्वकूलाभ्रकरीषेषु कषः' इति खशि 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । कलिन्दपुत्र्याः यमुनायाः ॥ २० ॥

विभावरीचम्पककर्णपूरा
बभासिरे वेश्मसु दीपलेखाः ।
पलायमानस्य रवेः पटिष्ठै-
र्बन्दीकृता भास इवान्धकारैः ॥ २१ ॥

---

[1] स्तमःसमूहाः शतशः समन्तात्. M.

व्या ॥ विभावरीत्यादि । विभावरीचम्पककर्णपूराः—विभावर्याः रात्र्याः एव स्त्रियः चम्पककर्णपूराः चम्पककुसुमरूपकर्णावतंसाः । वेश्मसु गृहेषु । दीपलेखाः दीपराजयः । पलायमानस्य धावतः । रवेः सूर्यस्य । पटिष्ठैः अतिपटुभिः । बन्दीकृताः कारागृहीताः ॥ २१ ॥

जिज्ञासमानास्तिमिरप्रवृत्ति-
मर्कस्य चारा इव संचरन्तः ।
सन्ध्याकृशानोरिव विष्फुलिङ्गा-
स्तमोमणीनां व्यरुचन् निकायाः ॥ २२ ॥

व्या ॥ जिज्ञासमाना इति । जिज्ञासमानाः ज्ञातुमिच्छन्तः; जानातेः सन्नन्ताच्छानच्; 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । तिमिरप्रवृत्तिम्—तिमिरस्य तमसः स्वशत्रोः प्रवृत्तिं वृत्तान्तम् । चाराः चारपुरुषाः; 'अपसर्पश्चरः स्पशः' इत्यमरः । सन्ध्याकृशानोः सन्ध्यारूपवह्नेः । विष्फुलिङ्गाः अग्निकणाः; 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । तमोमणीनां खद्योतानाम्; 'अथ तमोमणिः । ध्वान्तोन्मेषश्च खद्योतः' इति त्रिकाण्डशेषः । निकायाः राशयः; 'स्यान्निकायः पुञ्जराशी' इत्यमरः ॥ २२ ॥

निशान्धकारप्रकराम्बुवाह-
निष्ठ्यूतधाराकरकाभिरामैः ।
तारागणैर्दन्तुरमन्तरिक्षं
कान्तिं दधौ कैरवकाननस्य ॥ २३ ॥

व्या ॥ निशेत्यादि । निशान्धकारप्रकराम्बुवाहनिष्ठ्यूतधाराकरकाभिरामैः—निशायां रात्रौ ये अन्धकारप्रकराः तमोनिकराः त

---

[1] च स्फुलिङ्गाः. M. निशाम्बुवाहप्रकरान्धकार. C.

एवाम्बुवाहाः मेघाः तैः निष्ठ्यूता उद्गीर्णा ये धारारूपाः करकाः ता इवाभिरामाः, तैः। तारागणैः नक्षत्रसमूहैः। दन्तुरं व्याप्तम्। कैरवकाननस्य कुमुदवनस्य ॥ २३ ॥

निरङ्कुशानां तिमिरद्विपानां
शुण्डाविकीर्णैरिव शीकरौघैः।
उद्दामशोभैर्निकरैरुडूनां
तारापथः शर्करिलो बभूव ॥ २४ ॥

व्या ॥ निरङ्कुशानामिति। निरङ्कुशानां निरर्गलप्रवृत्तीनाम्। तिमिरद्विपानां तमोरूपगजानाम्। शुण्डाविकीर्णैः शुण्डया गजकरेण विक्षिप्तैः। शीकरौघैः जलबिन्दुसमूहैः। उद्दामशोभैः प्रकृष्टप्रकाशैः। निकरैः समूहैः। उडूनां नक्षत्राणाम्; 'तारकाप्युडु वास्त्रियाम्' इत्यमरः। तारापथः ताराणां पन्थाः; आकाशः। शर्करिलः शर्कराः शिलाभेदाः सन्त्यत्रेति शर्करिलः 'देशे लुबिलचौ च' इति इलच्प्रत्ययः। 'शर्करा तु शिलाभेदे' 'शार्करः शर्कराधिकः। देशः शर्करिलोऽप्येवम्' इति च वैजयन्ती ॥ २४ ॥

तमालनीलं तगरावदातै-
स्तारागणैर्दन्तुरमन्तरिक्षम्।
अगस्त्यपीतस्य जहार सिन्धो-
राकीर्णमुक्तानिकरस्य शोभाम् ॥ २५ ॥

व्या ॥ तमालेत्यादि। तमालनीलम्—तमालपुष्पवन्नीलम्। तगरावदातैः—तगरवत् नन्द्यावर्तपुष्पवत् अवदातैः श्वेतैः; 'नन्द्यावर्ते तु तगरः' इति वैजयन्ती। सिन्धोः समुद्रस्य। आकीर्णमुक्तानिकरस्य—आकीर्णः विक्षिप्तः मुक्तानिकरः मौक्तिकसमूहः यस्मिन् तस्य ॥ २५ ॥

अथ एकविंशत्या पद्यैश्चन्द्रोदयं वर्णयति—

समुद्रगर्भान्तरमाश्रयन्तं
तमोऽपहं चन्द्रमसं तनूजम्।
समुद्वहन्ती शतमन्युकाष्ठा
शनैर्मुखे पाण्डुरतामयासीत् ॥ २६ ॥

व्या ॥ समुद्रेत्यादि । समुद्रगर्भान्तरम्— समुद्र एव गर्भः तस्य अन्तरम् अन्तर्भागम् । तमोऽपहम् तमः अन्धकारं पुत्राभावजन्यं शोकं चापहन्तीति तम्; 'तमो ध्वान्ते गुणे शोके' इति मेदिनी। तनूजं पुत्रम् । शतमन्युकाष्ठा इन्द्रदिक्, प्राची । मुखे प्रारम्भभागे, आनने च । पाण्डरतां धवलताम् ॥ २६ ॥

चकाशिरे चन्द्रमसः समुत्थाः
समुद्रगूढस्य मयूखमालाः ।
पीत्वा प्रवाहं तिमिभिः सरन्ध्रैः
शिरोभिरूर्ध्वप्रहिता इवापः ॥ २७ ॥

व्या ॥ चकाशिर इति । समुत्थाः ऊर्ध्वप्रसृताः । समुद्रगूढस्य सागरान्तर्वर्तिनः । मयूखमालाः किरणपुञ्जाः । तिमिभिः मत्स्यविशेषैः कर्तृभिः । सरन्ध्रैः सुषिरसहितैः । शिरोभिः करणैः । ऊर्ध्वप्रहिताः ऊर्ध्वं प्रेरिताः । तिमयो नाम महाकायाः सरन्ध्रशिरस्काः सामुद्रा मत्स्यविशेषाः । एषां सरन्ध्रशिरस्कत्वं रघुवंशेऽप्यभिहितम्— 'ससत्त्वमादाय नदीमुखाम्भः संमीलयन्तो विवृताननत्वात् । अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥' इति ॥ २७ ॥

अथोदितः शीतकरस्य बिम्बः
किञ्चित्समाविष्कृतलाञ्छनश्रीः ।

शृङ्गारयोनेस्त्रिजगज्जिगीषो-
विषाङ्कितो बाण इवार्धचन्द्रः ॥ २८ ॥

व्या ॥ अर्धोदित इति । अर्धोदितः अर्धोद्गतः । किञ्चित्समाविष्कृतलाञ्छनश्रीः—किञ्चित् समाविष्कृता प्रकटिता लाञ्छनश्रीः कलङ्कशोभा येन सः । शृङ्गारयोनेः मदनस्य ; 'शृङ्गारयोनिः श्रीपुत्रः' इत्यमरः । त्रिजगज्जिगीषोः लोकत्रयं जेतुमिच्छोः । विषाङ्कितः—विषेण चिह्नितः । अर्धचन्द्रः अर्धचन्द्राकारः ॥ २८ ॥

तमालनीलस्य समुद्रविष्णो-
स्ताराधिभूमण्डलपुण्डरीकम् ।
आवर्तनाभीविवरादुदस्था-
दालक्ष्यचिह्नभ्रमराभिरामम् ॥ २९ ॥

व्या ॥ तमालेत्यादि । तमालनीलस्य—तमालपुष्पवत् नीलवर्णस्य । समुद्रविष्णोः समुद्ररूपविष्णोः । ताराधिभूमण्डलपुण्डरीकम्—ताराधिभुवः नक्षत्रराजस्य चन्द्रस्य मण्डलमेव पुण्डरीकं सिताम्भोजम् ; 'अधिभूर्नायको नेता,' 'पुण्डरीकं सिताम्भोजम्' इति चामरः । आवर्तनाभीविवरात्—आवर्तस्यैव नाभ्याः विवरात् रन्ध्रात् । उदस्थात् उदतिष्ठत । आलक्ष्यचिह्नभ्रमराभिरामम्—आलक्ष्येण दृश्येन चिह्नेनैव भ्रमरेणाभिरामं मनोहरम् ॥ २९ ॥

समुज्जिहानं लवणाब्धिमध्या-
त्तारापतेर्मण्डलमुत्तरङ्गात् ।
उवाह तस्मादभिमथ्यमाना-
दुन्मज्जदैरावतकुम्भलीलाम् ॥ ३० ॥

व्या ॥ समुज्जिहानमिति । समुज्जिहानम् उद्गतम् । उत्तरङ्गात्—उद्गतास्तरङ्गा यस्मात्तस्मात् । तस्मात् समुद्रात् । उन्मज्जदैरावतकुम्भ-

लीलाम्—उन्मज्जतः उद्गच्छतः ऐरावतस्य इन्द्रगजस्य कुम्भलीलां मस्तकशोभाम् ॥ ३० ॥

उद्यच्छमानस्तुहिनांशुमाली
यतः प्रवालारुणमण्डलोऽभूत् ।
[1]तद्वाडवेनार्णवमूषिकाया-
मावर्जितैराहित एव रत्नैः ॥ ३१ ॥

व्या ॥ उद्यच्छमान इति । उद्यच्छमानः उद्गच्छन् । तुहिनांशुमाली—तुहिनानां हिमानाम् अंशूनां माला अस्यास्तीति तादृशः चन्द्रः । प्रवालारुणमण्डलः—प्रवालवत् विद्रुमवत् अरुणं रक्तं मण्डलं यस्य सः । बाडवेन बडवाग्निना; 'बाडवो बडवानलः' इत्यमरः । अर्णवमूषिकायाम्—मूषा एव मूषिका, अर्णव एव मूषिका तैजसावर्तनी तस्याम्; 'तैजसावर्तनी मूषा' इत्यमरः । आवर्जितैः द्राविंतैः । आहितः कृतः । समुद्रमूषायां बडवाग्निना रत्नानि विद्राव्य विनिर्मितत्वादेव चन्द्रस्यारुणकान्तिरिति भावः ॥ ३१ ॥

सधैर्यमाधाय तटेषु पादं
पूर्वाद्रिमारोहति राजसिंहे ।
भीता इव ध्वान्तमतङ्गजेन्द्रा
महीभृतां गह्वरमाश्रयन्ते ॥ ३२ ॥

व्या ॥ सधैर्यमिति । आधाय निक्षिप्य । तटेषु सानुषु; 'प्रपातस्तु तटो भृगुः' इत्यमरः । पादं किरणं चरणं च; 'पादरश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । राजसिंहे चन्द्ररूपसिंहे । ध्वान्तमतङ्गजेन्द्राः—ध्वान्तान्येव मतङ्गजेन्द्राः गजराजाः । महीभृतां पर्वतानाम् । गह्वरं गुहाम्; 'गह्वरं कन्दरे दम्भे' इति वैजयन्ती ॥ ३२ ॥

---

[1] धीर. M., C. and P.

अस्ताद्रिशृङ्गस्खलिताग्रपादः
पपात भास्वानपराम्बुराशौ ।
इतीव भीतः[1] कटकान् करेण
स्पृष्ट्वारुरोह प्रथमाद्रिमिन्दुः ॥ ३३ ॥

व्या ॥ अस्ताद्रीत्यादि । अस्ताद्रिशृङ्गस्खलिताग्रपादः—अस्ताद्रेः शृङ्गात् शिखरात् स्खलितः अग्रपादः पादाग्रं रश्म्यग्रं च यस्य सः । अपराम्बुराशौ पश्चिमसमुद्रे । इतीव इति मत्वेत्यर्थः । कटकान् अद्रिनितम्बान्; 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । करेण किरणेन हस्तेन च; 'बलिहस्तांशवः कराः' इत्यमरः । स्पृष्ट्वा अवलम्ब्य । अन्यविपद्दर्शनेनान्यस्य जागरूकता भवतीति भावः ॥ ३३ ॥

नवोदयालोहितमिन्दुबिम्बं
विदिद्युते पार्वणमम्बरान्ते ।
सायाह्नमुद्राधिकृतेन धातु-
द्रवेण संन्यस्तमिवैकचिह्नम् ॥ ३४ ॥

व्या ॥ नवेत्यादि । नवोदयालोहितम्—नवोदयेन नूतनाविर्भावेन आलोहितं सम्यग्रक्तम् । विदिद्युते बभौ । पार्वणम्—पर्वणि भवम्, पूर्णमित्यर्थः । सायाह्नमुद्राधिकृतेन—सायाह्नेन सायंकालेनैव मुद्रायां कोशादीनामङ्कने अधिकृतेन नियुक्तेन कर्त्रा । धातुद्रवेण गैरिकेण करणेन । संन्यस्तं निक्षिप्तम् । एकचिह्नम् एकाङ्कनम् ॥ ३४ ॥

विभावरीशः करपल्लवेन
भृङ्गावलीमङ्गलसूत्रमालाम् ।
कुमुद्वतीनां कुमुदोपकण्ठे
संयोजयामास सकौतुकानाम् ॥ ३५ ॥

---

[1] भीरुः. V.

व्या ॥ विभावरीश इति । विभावरीशः चन्द्रः । भृङ्गावली-मङ्गलसूत्रमालाम्—भृङ्गावल्येव मङ्गलसूत्रमाला ताम् । कुमुद्वतीनां कुमुदिनीनाम् । कुमुदोपकण्ठे --कुमुदरूपकण्ठे कुमुदसमीपे च । सकौतुकानां —विकासिनीनां प्रतिसरसूत्रसहितानां च; 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले' इति वैजयन्ती ॥ ३५ ॥

आकर्ण्य गानं मधुपाङ्गनानां
कर्णामृतं प्रीत इवामृतांशुः ।
दिदेश ताभ्यो मकरन्दगर्भ-
मामुद्रितं कैरवकोशजातम् ॥ ३६ ॥

व्या ॥ आकर्ण्येति । मधुपाङ्गनानां भ्रमरीणाम् । कर्णामृतम् — कर्णयोरमृतवत्प्रीतिजनकम् । ताभ्यः गायकभ्रमरीभ्यः । मकरन्दगर्भम् — मकरन्दो गर्भे यस्य तत् । आमुद्रितम् ईषन्मुकुलितं, लाञ्छितं च । कैरवकोशजातम् -कैरवकोशाः कुमुदमुकुला एव कोशाः धनराशयः तेषां जातं समूहम्; 'कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थौघे गृहे तनौ' इति वैजयन्ती ॥ ३६ ॥

पत्युः करस्पर्शपरिश्लथस्य
तमिस्रकेशस्य निशाङ्गनायाः ।
नवप्रसूनैरिव विप्रकीर्णै-
र्नक्षत्रजालैः शुशुभे नभःश्रीः ॥ ३७ ॥

व्या ॥ पत्युरिति । पत्युः चन्द्रमसः । करस्पर्शपरिश्लथस्य— कराणां हस्तानां किरणानां च स्पर्शेन संपर्केण परिश्लथस्य शिथिलस्य । तमिस्रकेशस्य तमोरूपकचस्य । नवप्रसूनैः नूतनपुष्पैः । विप्रकीर्णैः अभितः पतितैः ॥ ३७ ॥

विपक्वताराधिपबिम्बशङ्ख-
विमुक्तमुक्ताफलदन्तुरेव ।
व्योमापगाशीकरराजितेव
विदिद्युते तारकिता नभःश्रीः ॥ ३८ ॥

व्या ॥ विपक्वेत्यादि । विपक्वताराधिपबिम्बशङ्खविमुक्तमुक्ताफलदन्तुरा --विपक्वं फलोन्मुखम्, अविकलसंजातमित्यर्थः, यत् ताराधिपबिम्बं चन्द्रमण्डलं तदेव शङ्खः तेन विमुक्तैः अभिवृष्टैः मुक्ताफलैः दन्तुरा व्याप्ता । व्योमापगाशीकरराजिता—व्योमापगायाः स्वर्णद्याः शीकरैः बिन्दुभिः राजिता प्रकाशिता । तारकिता संजाततारका ॥ ३८ ॥

आकाशशय्यातलमश्नुवाने
सुधाकरे भर्तरि सानुरागे ।
श्यामाङ्गनायास्तिमिरान्तरीय-
माकाशमध्यादपयातमासीत् ॥ ३९ ॥

व्या ॥ आकाशेत्यादि । आकाशशय्यातलम्—आकाशमेव शयनप्रदेशम् । अश्नुवाने अधितिष्ठति । सानुरागे—अनुरागेण रत्या रक्तवर्णेन च सहिते । श्यामाङ्गनायाः श्यामायाः रात्रेरेव [1]यौवनमध्यस्थायाश्च स्त्रियः । तिमिरान्तरीयं तमोरूपपरिधानीयम् । आकाशमध्यात् गगनमध्यात्, आकाशतुल्यमध्यभागाच्च । अपयातं गलितम् ॥ ३९॥

पतिः पशूनामिव कालकूटं
पतिं नदीनामिव कुम्भयोनिः ।
आदाय चन्द्रः करपल्लवेन
गाढान्धकारं कबलीचकार ॥ ४० ॥

व्या ॥ पतिरिति । पतिः पशूनाम्—पशुपतिः रुद्रः । कालकूटं विषभेदम् । कुम्भयोनिः अगस्त्यः । कबलीचकार भक्षयामास ॥ ४० ॥

[1] पति. M.

वियोगदुःखादिव पाण्डराङ्गीं
विलम्बमानभ्रमरालकान्ताम् ।
कुमुद्वतीमासवपुष्पदिग्धा-
माश्वासयामास करेण चन्द्रः ॥ ४१ ॥

व्या ॥ वियोगेत्यादि । वियोगदुःखात् विरहखेदात् । पाण्डराङ्गीं धवलावयवाम् । विलम्बमानभ्रमरालकान्ताम् — विलम्बमानः परिलम्बमानः भ्रमरा एवालकान्तः यस्यास्ताम् । आसवपुष्पदिग्धाम् आसवभरितैः पुष्पैः दिग्धां व्याप्ताम्; शैत्योपचाराय सर्वाङ्गनिक्षिप्तपुष्पामित्यर्थः । करेण किरणेन हस्तेन च ॥ ४१ ॥

वेलाजलेषु मणिदर्पणविभ्रमेषु
च्छायागतेन शशलाञ्छनमण्डलेन ।
वाराकरो वरुणभूपतिना मणीना-
मेकाकरो रचितमुद्र इवाशशङ्के ॥ ४२ ॥

व्या ॥ वेलेत्यादि । वेलाजलेषु प्रवृद्धजलेषु । मणिदर्पणविभ्रमेषु— मणिदर्पणस्य विभ्रम इव विभ्रमो येषां तेषु । छायागतेन प्रतिबिम्बितेन । वाराकरः—वारामाकरः, समुद्रः ; 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः । वरुणभूपतिना वरुणमहाराजेन । एकाकरः मुख्यखनिः । रचितमुद्रः— रचिता कृता मुद्रा चिह्नं यस्मिन् सः । वसन्ततिलका वृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ ४२ ॥

अन्तःपरिस्फुरितबालतमालकान्ति-
र्लक्ष्यते स्म रजनीकरमण्डलश्रीः ।
आमृक्तभागविवृताननसैंहिकेय-
दंष्ट्राकरालगरलद्रवमुद्रितेव ॥ ४३ ॥

व्या ॥ अन्तरित्यादि । अन्तःपरिस्फुरितबालतमालकान्तिः— अन्तः अभ्यन्तरे परिस्फुरिता बालतमालस्य बालतापिञ्छकुसुमस्य

कान्तिरिव कान्तिर्यस्य सः । आसृक्कभागविवृताननसैंहिकेयदंष्ट्राकराल-गरलद्रवमुद्रिता—आसृक्कभागम् ओष्ठप्रान्तपर्यन्तं विवृताननस्य व्यात्त-मुखस्य सैंहिकेयस्य राहोः दंष्ट्रयोः यः करालः भयंकरः गरलद्रवः विषद्रवः तेन मुद्रिता चिह्निता; 'प्रान्तावोष्ठस्य सृक्कणी,' 'सैंहिकेयो विधुंतुदः' इति चामरः । 'करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्' इति मेदिनी । कलङ्कः ग्रहणकालिकराहुमुखसंबन्धसंक्रान्तविषमिव बभौ इति भावः ॥ ४३ ॥

बिम्बं प्रदर्शितकुरङ्गकलङ्करेखं
व्यक्तं बभौ कुमुदिनीकुलदैवतस्य ।
आवर्तमण्डलमिवाचलसार्वभौम-
कन्याकलिन्दतनयामिलनोपजातम् ॥ ४४ ॥

व्या ॥ बिम्बमिति । प्रदर्शितकुरङ्गकलङ्करेखम्—प्रदर्शिता प्रकटिता कुरङ्गरूपा कलङ्करेखा यस्य तत् । कुमुदिनीकुलदैवतस्य चन्द्रस्य । आवर्तमण्डलं जलभ्रमचक्रम् । अचलसार्वभौमकन्याकलिन्दत-नयामिलनोपजातम् —अचलसार्वभौमः हिमवान् तत्कन्यायाः गङ्गायाः कलिन्दतनयायाः यमुनायाश्च मिलनेन संगमनेन उपजातम् उत्पन्नम् ॥ ४४ ॥

अन्तःस्फुरन्मृगकलङ्कमभङ्गुराभ-
मत्यर्थमेव शुशुभे द्विजराजबिम्बम् ।
ताटङ्कचक्रमिव दन्तमयं तमिस्रा-
वामभ्रुवो मरकताङ्कितमध्यदेशम् ॥ ४५ ॥

व्या ॥ अन्तरित्यादि । अन्तःस्फुरन्मृगकलङ्कम्—अन्तः मध्यभागे स्फुरत् मृगरूपचिह्नं यस्य तत् । अभङ्गुराभम् अनश्वरद्युति । द्विजराज-बिम्बं चन्द्रमण्डलम् । ताटङ्कचक्रं कर्णकुण्डलम्; 'ताटङ्कस्तु तालपत्रं कुण्डलं कर्णवेष्टकः' इति हेमचन्द्रः । दन्तमयम्—दन्तानां विकारः

तादृशम् । तमिस्रावामभ्रुवः निशाङ्गनायाः । मरकताङ्कितमध्यदेशम्—मरकतेन हरिन्मणिना अङ्कितः मध्यदेशः यस्य तत् ॥ ४५ ॥

अन्तर्मलीमसमभादमृतांशुबिम्ब-
मम्भोदवातमलिनोदरदर्पणाभम् ।
कण्ठप्रभाप्रसरकर्बुरितान्तरालं
भिक्षाकपालमिव किंच कपालपाणेः ॥ ४६ ॥

व्या ॥ अन्तरित्यादि । अन्तर्मलीमसम् अन्तर्मलिनम्; 'मलीमसं तु मलिनम्' इत्यमरः । अम्भोदवातमलिनोदरदर्पणाभम् अम्भोदवातेन मेघवायुना मलिनम् उदरं मध्यं यस्य तादृशस्य दर्पणस्य मुकुरस्य आभेव आभा यस्य तत्; 'दर्पणे मकुरादर्शौ' इत्यमरः । कण्ठप्रभाप्रसरकर्बुरितान्तरालम्—कण्ठप्रभायाः गलकान्तेः प्रसरेण व्यापनेन कर्बुरितं शबलितम् अन्तरालं मध्यं यस्य तत् । भिक्षाकपालम्—भिक्षायाः कपालं शिरोऽस्थि; 'शिरोऽस्थि तु कपालोऽस्त्री' इत्यमरः । कपालपाणेः—कपालं पाणौ यस्य तस्य रुद्रस्य ॥ ४६ ॥

स्पष्टे प्रदीपसमये नरपालसूनु-
स्त्वष्ट्रा समारचितमङ्गलमण्डनश्रीः ।
वाराङ्गनाभिरभितो मणिदीपिकाभि-
रासेवितः स्वभवनं पुनराजगाम ॥ ४७ ॥

इति बुद्धघोषविरचिते पद्यचूडामणिनाम्नि महाकाव्येऽष्टमः सर्गः ॥

व्या ॥ स्पष्ट इति । स्पष्टे प्रकाशमाने । त्वष्ट्रा देवशिल्पिना; 'देवशिल्पिन्यपि त्वष्टा' इत्यमरः । समारचितमङ्गलमण्डनश्रीः—समारचिता कृता मङ्गलमण्डनस्य शुभालंकारस्य श्रीः यस्य सः । वाराङ्गनाभिः गणिकाभिः । अभितः पार्श्वद्वये । मणिदीपिकाभिः रत्नदीपैः । आसेवितः परिवृतः ॥ ४७ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायामष्टमः सर्गः ॥

श्रीः ॥

नवमः सर्गः

आगत्य[1] गेहमध्यास्य कुमारो भद्रपीठिकाम् ।
आरब्धं मातृधात्रीभिरारात्रिकमुपाददे ॥ १ ॥

व्या ॥ आगत्येति । भद्रपीठिकां सिंहासनम् । आरब्धम् उपक्रान्तम् । मातृधात्रीभिः—मात्रा सहिताभिः धात्रीभिः उपमातृभिः; 'धात्री स्यादुपमाता' इति हेमचन्द्रः । आरात्रिकं नीराजनम् । उपाददे स्वीचकार ॥ १ ॥

महाराजाधिराजस्य तनयो मण्डपस्थितः ।
सिंहासनमियायैष सिंहसंहननस्ततः ॥ २ ॥

व्या ॥ महाराजेत्यादि । इयाय प्राप । सिंहसंहननः—सिंहस्येव संहननं शरीरं यस्य सः; 'गात्रं वपुः संहननम्' इत्यमरः । ततः आरात्रिकस्वीकारानन्तरम् ॥ २ ॥

वारवामालकास्तस्य मधुराकृतयः पुरः ।
आरेभिरे दर्शयितुमद्भुतं नृत्तविभ्रमम्[2] ॥ ३ ॥

व्या ॥ वारेत्यादि । वारवामालकाः वेश्याङ्गनाः । मधुराकृतयः मनोज्ञरूपाः । नृत्तविभ्रमं नर्तनविलासम्; 'विलासबिब्बोकविभ्रमा ललितं तथा' इत्यमरः ॥ ३ ॥

असक्तहृदयस्तासामङ्गहारमनोहरे ।
संगीते नवगीतेऽपि स चिन्तामन्तराददौ[3] ॥ ४ ॥

---

[1] अगस्त्य. C.    [2] विक्रमम् C. and P.    [3] ददे. V.

व्या ॥ असक्तेत्यादि । असक्तहृदयः अलग्नमनाः । अङ्गहारमनोहरे—अङ्गहारेण अङ्गविक्षेपेण मनोहरे सौम्ये; 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः । नवगीते—नवं नूतं गीतं यस्मिंस्तस्मिन् ॥ ४ ॥

तदा बभौ कुमारोऽसौ चामरैरमरोच्छ्रितैः ।
समीरणसमुद्धूतैस्तरङ्गैरिव सागरः ॥ ५ ॥

व्या ॥ तदेति । अमरोच्छ्रितैः—अमरैः देवैः उच्छ्रितैः उद्धृतैः । समीरणसमुद्धूतैः—समीरणेन वायुना समुद्धूतैः ऊर्ध्वप्रेरितैः ॥ ५ ॥

ध्वजरक्तपताकाभिः शुशुभे क्षोणिमण्डलम् ।
अन्तरिक्षमिवानेकविद्युद्वल्लीभिरावृतम् ॥ ६ ॥

व्या ॥ ध्वजेत्यादि । ध्वजरक्तपताकाभिः—ध्वजानां रक्तवर्णाभिः पताकाभिः वैजयन्तीभिः; 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्' इत्यमरः । अनेकविद्युद्वल्लीभिः—अनेकाभिस्तटिल्लताभिः ॥ ६ ॥

कालागरुमहाधूमवल्लीवल्लितमम्बरम् ।
कृष्णोरगशताकीर्णं रसातलमिवाबभौ ॥ ७ ॥

व्या ॥ कालेत्यादि । कालागरुमहाधूमवल्लीवल्लितम्—कालागरोः अगरुखण्डस्य महाधूमवल्लीभिः लतासदृशमहाधूमैः वेल्लितं वेष्टितम् । कृष्णोरगशताकीर्णं—कृष्णोरगाणां कृष्णसर्पाणां शतेन आकीर्णं व्याप्तम्; 'उरगः पन्नगो भोगी' इत्यमरः । रसातलं पातालम्; 'बलिसद्म रसातलम्' इत्यमरः ॥ ७ ॥

ब्रह्माण्डकुक्षिभरिभिर्बधिरीकृतदिङ्मुखैः ।
अनेकपटहध्वानैराध्मातमभवन्नभः ॥ ८ ॥

[1] ब. P.C. [2] मिवा. C. and P.

व्या ॥ ब्रह्माण्डेत्यादि । ब्रह्माण्डकुक्षिंभरिभिः—ब्रह्माण्डेन कुक्षिमुदरं बिभ्रति, पूरयन्तीति ब्रह्माण्डकुक्षिंभरयः तैः, ब्रह्माण्डव्यापकैरित्यर्थः; 'उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके' इत्यमरः । बधिरीकृतदिङ्मुखैः अबधिराणि बधिराणि संपद्यमानानि कृतानि बधिरीकृतानि शब्दग्रहणापटूकृतानि दिशां मुखानि प्रारम्भभागाः यैस्तैः । अनेकपटहध्वानैः अनेकानकध्वनिभिः; 'आनकः पटहोऽस्त्री' इत्यमरः । आध्मातं मुखरितम् । नभः गगनम्; 'नभोऽन्तरिक्षं गगनम्' इत्यमरः ॥ ८ ॥

ऐरावत्य इवाकाशरङ्गेष्वमरयोषितः ।
घनवाद्यरवाश्चक्रुरखण्डं ताण्डवक्रमम् ॥ ९ ॥

व्या ॥ ऐरावत्य इति । ऐरावत्यः विद्युतः; 'शम्पा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा' इत्यमरः । आकाशरङ्गेषु आकाशरूपनर्तनस्थलेषु । घनवाद्यरवाः घनः मेघः कांस्यादिमयस्तालश्च तद्रूपं यत् वाद्यं तस्य रवो यासां ताः; 'कांस्यतालादिकं घनम्' इत्यमरः । अखण्डम् अविच्छिन्नम् । ताण्डवक्रमम्—ताण्डवस्य नटनविशेषस्य क्रमं प्रकारम् ॥ ९ ॥

तासां तरलसंचारदृष्टिभिर्मुखमण्डलैः ।
तारापथस्थलमभूत्सहस्रमृगलाञ्छनम् ॥ १० ॥

व्या ॥ तासामिति । तासाम् अमरस्त्रीणाम् । तरलसंचारदृष्टिभिः—तरलसंचाराः चञ्चलगतयः दृष्टयः येषु तैः । तारापथस्थलं गगनप्रदेशः । सहस्रमृगलाञ्छनम्—सहस्रं बहवः मृगलाञ्छनाः चन्द्राः यस्मिंस्तत् ॥ १० ॥

विद्याधराश्च गन्धर्वा वीणागर्भितपाणयः ।
पूर्वापदानमुखराः पुरस्तस्य प्रतस्थिरे ॥ ११ ॥

व्या ॥ विद्याधरा इति । वीणागर्भितपाणयः—वीणाभिः संजातगर्भाः पाणयः येषां ते; पाणिगृहीतवीणा इत्यर्थः । पूर्वापदानमुखराः — पूर्वापदानेन पूर्वचरितेन मुखराः शब्दं कुर्वन्तः; अपदानं गायन्त इत्यर्थः ॥ ११ ॥

महेन्द्रकरविक्षिप्ता मन्दारसुमनोभराः ।
भुवनक्षोभगलिताः पुस्फुरुस्तारका इव ॥ १२ ॥

व्या ॥ महेन्द्रेत्यादि । महेन्द्रकरविक्षिप्ताः इन्द्रहस्तविकीर्णाः । मन्दारसुमनोभराः—मन्दारसुमनसां मन्दारपुष्पाणां भराः । भुवनक्षोभगलिताः भुवनक्षोभेण जगदुत्पातेन पतिताः । पुस्फुरुः प्रचकाशिरे ॥ १२ ॥

इत्थमाराधितो देवैर्दशत्रितययोजनम् ।
अतीत्य पन्थानमसावगादनवमां नदीम् । १३ ॥

व्या ॥ इत्थमिति । दशत्रितययोजनम्—दशानां त्रितयं योजनानि यस्य तम्; त्रिंशद्योजनायाममित्यर्थः । अनवमाम् अनवमाख्याम् ॥ १३ ॥

अथ चतुर्भिः पद्यैरनवमां वर्णयति—

मरालमहिलालीढमृणालदलमेदुराम् ।
गभीरमकरारावमुखरीकृतदिङ्मुखाम् ॥ १४ ॥

[1] द्गा.. M. and P.    [2] वागा. M.    [3] मुखरा. C and P.

व्या ॥ मरालेत्यादि । मरालमहिलालीढमृणालदलमेदुराम् — मरालमहिलाभिः हंसीभिः आलीढैः आस्वादितैः मृणालदलैः बिसखण्डैः मेदुरां पूर्णाम्; 'हंसो मरालो नीलाक्षः' इति वैजयन्ती; 'मृणालं तन्तुलं बिसम्' इति हेमचन्द्रश्च । गभीरमकरारावमुखरीकृतदिङ्मुखाम्— गभीरेण गम्भीरेण मकराणां जलजन्तुविशेषाणामारावेण शब्देन मुखरीकृतानि मुखरितानि दिङ्मुखानि यस्यास्ताम् ॥ १४ ॥

तरङ्गशीकरासारतारादन्तुरिताम्बराम् ।
सरसीरुहसौरभ्यसुरभीकृतमारुताम् ॥ १५ ॥

व्या ॥ तरङ्गेत्यादि । तरङ्गशीकरासारतारादन्तुरिताम्बराम् — तरङ्गशीकराणां वीचीकणानाम् आसारैः प्रसरणैरेव, 'आसारः स्यात्प्रसरणे' इति विश्वः, ताराभिः नक्षत्रैः दन्तुरितं सान्द्रितम् अम्बरं यस्यास्ताम् । सरसीरुहसौरभ्यसुरभीकृतमारुताम् — सरसीरुहाणां पद्मानां सौरभ्येण सुरभीकृतः सुगन्धीकृतः मारुतः वातः यस्यास्ताम् ॥ १५ ॥

कल्लोलवल्लीवलयसमुल्लासितसारसाम् ।
कलहंसकलत्राणां कण्ठदघ्नोर्मिमण्डलीम् ॥ १६ ॥

व्या ॥ कल्लोलेत्यादि । कल्लोलवल्लीवलयसमुल्लासितसारसाम्— कल्लोला वल्ल्य इव तासां वलयेषु समुल्लासिताः भासमानाः सारसाः सारसपक्षिणः यस्यां ताम् । कलहंसकलत्राणां कादम्बयोषिताम्; 'कादम्बः कलहंसः स्यात्' इत्यमरः । कण्ठदघ्नोर्मिमण्डलीम्—कण्ठः प्रमाणमस्या इति कण्ठदघ्नी ऊर्मिमण्डली कल्लोलमाला यस्यां ताम् 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति दघ्नच्प्रत्ययः ॥ १६ ॥

मीनविक्षिप्तकल्हारपुञ्जकिञ्जल्करञ्जिताम् ।
विनिद्रकमलोदीर्णमधुद्रवतरङ्गिताम् ॥ १७ ॥

व्या ॥ मीनेत्यादि । मीनविक्षिप्तकल्हारपुञ्जकिञ्जल्करञ्जिताम्—मीनैः विक्षिप्तस्य कम्पितस्य कल्हारपुञ्जस्य सौगन्धिकपुष्पराशेः किञ्जल्कैः केसरैः रञ्जितां चित्रिताम्; 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः। विनिद्रकमलोदीर्णमधुद्रवतरङ्गिताम्—विनिद्रेभ्यः विकचेभ्यः कमलेभ्यः उदीर्णेन निःसृतेन मधुद्रवेण मरन्दप्रवाहेण तरङ्गितां संजाततरङ्गां, प्रवृद्धाम् ॥ १७ ॥

तारणाय महाम्भोधेस्तन्वन् गुणनिकामिव ।
चिन्तायुक्तेन वाहेन तां नदीमुदतीतरत् ॥ १८ ॥

व्या ॥ तारणायेति । महाम्भोधेः महतः सागरस्य । गुणनिकाम् असकृत्परिशीलनम् । वाहेन अश्वेन । नाम अनवमाख्याम्। उदतीतरत् उत्तारयामास ॥ १८ ॥

उत्तीर्य तस्याः पुलिने तुरगादवतीर्य सः ।
छन्नं निवर्तयामास दत्वा भूषाश्च वाहनम् ॥ १९ ॥

व्या ॥ उत्तीर्येति । पुलिने सैकते; 'तोयोत्थितं तत् पुलिनं सैकतम्' इत्यमरः । छन्नं गूढं यथा तथा । निवर्तयामास, आनुयात्रिकान् इति शेषः ॥ १९ ॥

आदिकल्पसमुद्भूतामादिब्रह्मसमाहृताम् ।
अग्रहीदग्रणी पुंसां तपोधनपरिष्क्रियाम् ॥ २० ॥

व्या ॥ आदीत्यादि । आदिकल्पसमुद्भूताम्—आदिकल्पे प्रथमकल्पे समुत्पन्नाम् । आदिब्रह्मसमाहृताम्—आदिब्रह्मणा प्रधानब्रह्मणा गृहीताम् । तपोधनपरिष्क्रियाम्—मुनीनां परिष्क्रियां वेषम् ॥ २० ॥

आदाय तापसाकल्पमनल्पगुणगुम्भितम् ।
आच्छाद्य तेन चात्मानमधत्त तपसि स्थितिम् ॥ २१ ॥

व्या ॥ आदायेति । तापसाकल्पं तापसवेषम्; 'आकल्पवेषौ नैपथ्यम्' इत्यमरः । अनल्पगुणगुम्भितं बहुगुणपूर्णम् ॥ २१ ॥

अथावलोक्य लोकेशं दीक्षितं शक्रदिङ्मुखम् ।
आनन्दमन्दहसितैरिव पाण्डरतामयात् ॥ २२ ॥

व्या ॥ अथेति । अथ तपोनिष्ठाग्रहणानन्तरम् । दीक्षितं तपोदीक्षायुक्तम् । शक्रदिङ्मुखम् इन्द्रदिक्प्रारम्भभागः । पाण्डरतां धावल्यम् । प्रभातकालः सन्निहित इति भावः ॥ २२ ॥

समस्तलोकनाथस्य तस्य शास्तुरिवाज्ञया ।
शतमन्युदिशाधत्त सन्ध्यापाटलमम्बरम् ॥ २३ ॥

व्या ॥ समस्तेत्यादि । शास्तुः सिद्धार्थस्य । शतमन्युदिशा प्राची दिक् । सन्ध्यापाटलम्—सन्ध्यया सन्ध्यावच्च पाटलं श्वेतरक्तवर्णम्; 'श्वेतरक्तस्तु पाटलः' इत्यमरः । अम्बरं वस्त्रं गगनं च; 'अम्बरं व्योम्नि वाससि' इत्यमरः । सिद्धार्थाज्ञया प्राची दिगपि कषायवस्त्रमधत्त इति श्लेषमूलकहेतूत्प्रेक्षा ॥ २३ ॥

तस्यावलोकनायेव शाक्यवंशशिखामणेः ।
अध्यास्त कुलकूटस्थः प्रथमाद्रिं गभस्तिमान् ॥ २४ ॥

व्या ॥ तस्येति । शाक्यवंशशिखामणेः—शाक्यवंशस्य शिरोमणेः । अध्यास्त अधितिष्ठति स्म । कुलकूटस्थः—कुलस्य शाक्यवंशस्य कूटस्थः मूलपुरुषः । प्रथमाद्रिम् उदयगिरिम् । गभस्तिमान् सूर्यः ॥ २४ ॥

अज्ञानमेवं जगतामपसार्यं त्वयेत्यपि ।
अस्यादिशन्निव रविरन्धकारमपाकरोत् ॥ २५ ॥

व्या ॥ अज्ञानमिति । अपसार्यं निराकरणीयम् । अस्य सिद्धार्थस्य । आदिशन् उपदिशन्, स्वप्रवृत्त्या सूचयन् इत्यर्थः । अन्धकारं तमः ॥ २५ ॥

ज्ञानालोकस्त्रिजगतामेवमेव त्वयेति च ।
अस्यादिशन्निवालोकमाविश्चक्रे विकर्तनः ॥ २६ ॥

व्या ॥ ज्ञानेत्यादि । ज्ञानालोकः ज्ञानरूपप्रकाशः; 'आलोको दर्शनाद्योतौ' इत्यमरः । एवमेव इत्थमेव; आविष्करणीयमिति शेषः । विकर्तनः सूर्यः; 'विकर्तनार्कमार्ताण्डमिहिरारुणपूषणः' इत्यमरः ॥ २६ ॥

दीक्षिते भूभृतां नाथे निर्विण्णा इव भूभृतः ।
अरुणातपलक्षेण चाक्रिरे वल्कधारणम् ॥ २७ ॥

व्या ॥ दीक्षित इति । भूभृतां पर्वतानां राज्ञां च । निर्विण्णाः निर्वेदयुक्ताः, विरक्ताः । भूभृतः पर्वता राजानश्च । अरुणातपलक्षेण अरुणातपव्याजेन । वल्कधारणं चीरधारणम्; 'वल्कं वल्कलमित्यपि' इत्यमरः ॥ २७ ॥

आदित्यबन्धोर्बोधैकसिन्धोः समुदयादिव ।
प्रबोधमुद्रामभजन् सकलाः कमलाकराः ॥ २८ ॥

व्या ॥ आदित्येत्यादि । आदित्यबन्धोः अर्कबन्धोः सिद्धार्थस्य; तद्वंश्यत्वात् । बोधैकसिन्धोः ज्ञाननिधेः । प्रबोधमुद्रां ज्ञानमुद्राम्,

[1] णा. M.

विकासचिह्नं च। कमलाकराः नलिन्यः। सनामसाधारणगुणाः स्ववंश्यानर्नु सरन्तीत्यनेन गम्यते ॥ २८ ॥

कृतकृत्यं तमुद्दिश्य कृताञ्जलिपुटा इव।
आबद्धमुकुलास्तस्थुरशेषाः कुमुदाकराः ॥ २९ ॥

व्या ॥ कृतेत्यादि। कृतकृत्यं कृतार्थम्। तं सिद्धार्थम्। कृताञ्जलिपुटाः बद्धाञ्जलयः। आबद्धमुकुलाः धृतकुड्मलाः। कुमुदाकराः कुमुदिन्यः ॥ २९ ॥

सन्मार्गदेशिकस्यास्य तीर्थिका इव तेजसा।
तपनस्य समाक्रान्तास्तारका निस्त्विषोऽभवन् ॥ ३० ॥

व्या ॥ सदित्यादि। सन्मार्गदेशिकस्य—सतां मार्गस्य मुक्तिमार्गस्य, आकाशमार्गस्य च, देशिकस्य उपदेष्टुः। अस्य सिद्धार्थस्य। तीर्थिकाः यतयः; तीर्थं शास्त्रम् एषामस्तीति तीर्थिकाः; 'तीर्थं शास्त्रे गुरौ यज्ञे' इति हेमचन्द्रः। तपनस्य सूर्यस्य; 'तपनः सविता रविः'. इत्यमरः। निस्त्विषः—निर्गताः त्विषः कान्तयः याभ्यस्ताः; कान्तिरहिता इत्यर्थः ॥ ३० ॥

अवकाशप्रदानार्थमिव तत्कीर्तिसंहतेः।
अशेषमाशाविवरमानशेऽतिविशालताम् ॥ ३१ ॥

व्या ॥ अवकाशेत्यादि। अवकाशप्रदानार्थम्—अवकाशस्य अवस्थानदेशस्य प्रदानाय। तत्कीर्तिसंहतेः—तस्य सिद्धार्थस्य कीर्तिसंहतेः यशःपुञ्जस्य। आशाविवरं दिग्भागः। आनशे प्राप। अतिविशालताम् अतिवैपुल्यम् ॥ ३१ ॥

सिद्धार्थमुखशीतांशुं दृष्ट्वा दीप्तं दिवापि च ।
व्रीडावशादिव विधुर्बभूव विगतच्छविः ॥ ३२ ॥

व्या॥ सिद्धार्थेत्यादि । दिवापि अहन्यपि ; अपिशब्देन रात्रिमात्रदीप्तात् चन्द्रात् व्यतिरेको व्यज्यते । विगतच्छविः— विगता छविः कान्तिः यस्य सः ॥ ३२ ॥

जगदेकगुरोस्तस्य दर्शनादिव दीप्तिमान् ।
विगतोदयरागश्रीर्विवेशाकाशमाश्रमम् ॥ ३३ ॥

व्या ॥ जगदित्यादि । दीप्तिमान् भास्वान् । विगतोदयरागश्रीः—विगता उदये स्थिता रागश्रीः अरुणकान्तिः यस्मात्सः ; अन्यत्र विगतोदया उत्पत्तिशून्या रागश्रीः विषयाभिलाषसंपत् यस्मात्सः॥३३॥

मनोरथशतप्राप्तप्रव्रज्यारसनिर्वृतः ।
दिनानि कानिचित्तस्यास्तीरे चिक्षेप देशिकः ॥ ३४ ॥

व्या ॥ मनोरथेत्यादि । मनोरथशतप्राप्तप्रव्रज्यारसनिर्वृतः—मनोरथानां संकल्पानां शतेन प्राप्तायाः प्रव्रज्यायाः संन्यासस्य रसेन निर्वृतः सुखितः । तस्याः अनवमानद्याः । चिक्षेप निनाय ॥ ३४ ॥

अन्येद्युरथ भिक्षार्थमादिभिक्षुर्बुभुक्षितः ।
व्यतीत्य दूरमध्वानं बिम्बसारपुरीमगात् ॥ ३५ ॥

व्या ॥ अन्येद्युरिति । अन्येद्युः अन्यस्मिन् दिने । आदिभिक्षुः भिक्षुश्रेष्ठः । बुभुक्षितः बुभुक्षा अस्य संजाता इति तादृशः क्षुधितः ; 'बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः' इत्यमरः । व्यतीत्य अतिक्रम्य । बिम्बसारपुरीं बिम्बसाराख्यनगरीम् ॥ ३५ ॥

षड्भिः श्लोकैः कुलकेन बिम्बसारपुरीं वर्णयति

विशङ्कटशिलासालर्विजितावधिभूधराम् ।
पातालागाधपरिखापल्वलीकृतसागराम् ॥ ३६ ॥

व्या ॥ विशङ्कटेत्यादि । विशङ्कटशिलासालविजितावधिभूधराम्— विशङ्कटेन पृथुना शिलासालेन शिलामयप्राकारेण विजितः अवधिभूतः भूधरः लोकालोकः यस्यास्ताम्; 'विशङ्कटं पृथु बृहत्' 'प्राकारो वरणः सालः' इति चामरः । पातालागाधपरिखापल्वलीकृतसागराम्—पातालपर्यन्तं रसातलपर्यन्तम् अगाधया अतिगम्भीरया परिखया खेयेन; 'खेयं तु परिखा' इत्यमरः, पल्वलीकृतः अल्पसरःकृतः; 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः, सागरः यस्यास्ताम् ॥ ३६ ॥

घाटीखुरपुटीकोटिक्रोडीकृतधरातलाम् ।
माद्यन्मदावलाधीशमदपङ्किलवीथिकाम् ॥ ३७ ॥

व्या ॥ घोटीत्यादि । घोटीखुरपुटीकोटिक्रोडीकृतधरातलाम्— घोटीनाम् अश्वजातीनां; जातिवाचित्वात् ङीष् ।; 'घोटसैन्धवगन्धर्वा हयवाजितुरङ्गमाः' इति रभसः, खुरपुटीनां शफप्रदेशानां कोटिभिः संख्याभिः क्रोडयां भुजान्तरं कृतम्; 'न ना क्रोडं भुजान्तरम्' इत्यमरः, व्याप्तमिति यावत् । धरातलं भूतलं यस्यां तथोक्ताम् । माद्यन्मदावलाधीशमदपङ्किलवीथिकाम्—माद्यतां मदयुक्तानां मदावलाधीशानां गजाधिपानां मदैः दानजलैः पङ्किलाः कर्दमवत्यः वीथिकाः रथ्याः यस्यां तथोक्ताम् ॥ ३७ ॥

माणिक्यसौधवलभीवलमानमरालिकाम्[1] ।
वातायनमुखोदीर्णधूमराजिविराजिताम् ॥ ३८ ॥

---

[1] •नरा. M

व्या ॥ माणिक्येत्यादि । माणिक्यसौधवलभीवलमानमरालिकाम्—माणिक्यानां सौधवलभीषु प्रासादगोपानसीषु वलमानाः संचरन्त्यः मरालिकाः हंसयोषितः यस्यां ताम् । वातायनमुखोदीर्णधूमराजिविराजिताम्—वातायनानां गवाक्षाणां मुखेभ्यः विवरेभ्यः उदीर्णया उद्गतया धूमराज्या विराजिताम् ॥ ३८ ॥

बालाचलतुलाकोटिवाचालहरिदञ्चलाम् ।
मन्दानिलसमाधूतध्वजचूडालमन्दिराम् ॥ ३९ ॥

व्या ॥ बालेत्यादि । बालाचलतुलाकोटिवाचालहरिदञ्चलाम्—बालानां स्त्रीणां चलाभिः चञ्चलाभिः तुलाकोटिभिः नूपुरैः वाचालानि मुखराणि हरिदञ्चलानि दिगन्तानि यस्यां ताम्; 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । मन्दानिलसमाधूतध्वजचूडालमन्दिराम्—मन्दानिलेन मन्दवायुना समाधूतेन कम्पितेन ध्वजेन चूडालानि शिखावन्ति मन्दिराणि गृहाणि यस्यां ताम् ॥ ३९ ॥

वलारिकार्मुकस्मेरमणितोरणमांसलाम् ।
वल्लीकिसलयारब्धरथ्यावन्दनमालिकाम् ॥ ४० ॥

व्या ॥ वलारीत्यादि । वलारिकार्मुकस्मेरमणितोरणमांसलाम्—वलारिकार्मुकेण इन्द्रचापेन स्मेरेण प्रकाशमानेन मणितोरणेन मणिमयबहिर्द्वारेण मांसलां प्रवृद्धाम्, प्रवृद्धकान्तिमित्यर्थः । वल्लीकिसलयारब्धरथ्यावन्दनमालिकाम्—वल्लीकिसलयैः लतापल्लवैः आरब्धाः कृताः रथ्यासु प्रधानवीथीषु स्थिताः वन्दनमालिकाः तोरणस्रजः यस्यां ताम्; 'तोरणाग्रे तु मङ्गल्यं दाम वन्दनमालिका' इति हेमचन्द्रः ॥ ४० ॥

---

¹ चलत्तुला. M.

विशालविशिखाभोगमेखलोज्ज्वलमध्यमाम् ।
विहारवापिकावीचीसमीचीनोपशाखिकाम् ॥ ४१ ॥

व्या ॥ विशालेत्यादि । विशालविशिखाभोगमेखलोज्ज्वलमध्यमाम्— विशालानां विस्तृतानां विशिखानां रथ्यानाम्, 'रथ्या प्रतोली विशिखा' इत्यमरः, आभोगो विस्तार एव मेखला काञ्ची तया उज्ज्वलः प्रकाशमानः मध्यमः मध्यभागः यस्यास्ताम् । विहारवापिकावीचीसमीचीनोपशाखिकाम् — विहारवापिकानां[1] क्रीडावापीनां वीचीभिः समीचीनाः क्षालिताः उपशाखिनः समीपस्थवृक्षाः यस्यास्ताम् ॥ ४१ ॥

तत्र भिक्षां समादातुं तपोधनशिखामणिः ।
वीथीषु वीथीषु शनैर्विजहार विनायकः ॥ ४२ ॥

व्या ॥ तत्रेति । तत्र बिम्बसारनगरे । तपोधनशिखामणिः ऋषिश्रेष्ठः । विनायकः सिद्धार्थः; 'दशबलोऽद्वयवादी विनायकः' इत्यमरः ॥ ४२ ॥

मोहापनोदमप्येनं मुनीन्द्रमभिवीक्षिताः ।
मुग्धा विदग्धाः सकला मोहनिद्रां प्रपेदिरे ॥ ४३ ॥

व्या ॥ मोहेत्यादि । मोहापनोदम् अज्ञाननिवर्तकम्; मोहम् अपनुदतीति 'कर्मण्यण्' इत्यण्प्रत्ययः। अभिवीक्षिताः अभिवीक्षितुमारब्धवत्यः; आदिकर्मणि कर्तरि क्तः । मुग्धाः रमणीया योषितः; 'मुग्धो मूढे रम्ये' इति हेमचन्द्रः । विदग्धाः चतुराः । मोहनिद्रां मोहरूपनिद्राम् । सिद्धार्थस्य सर्वमोहनिवर्तकगुणवत्त्वेऽपि रूपलावण्यादिवस्तुशक्तेरन्यथा-

---

[1] शल्प. M.

कर्तुमशक्यत्वात् स्त्रीणां मोहप्राप्तिः इति अपिना प्रतीयमानस्य विरोधस्य परिहारात् विरोधाभासोऽलङ्कारः ॥ ४३ ॥

विगतोन्मेषसंमेषविस्फारीकृतचक्षुषाम् ।
मनोभवारिरप्यासां मनोभवमजीजनत् ॥ ४४ ॥

व्या ॥ विगतेत्यादि । विगतोन्मेषसंमेषविस्फारीकृतचक्षुषाम्— विगतौ उन्मेषसंमेषौ उन्मीलननिमीलने यस्मिन् कर्मणि तद्यथा तथा विस्फारीकृतानि विपुलीकृतानि चक्षूंषि याभिस्तासाम् । मनोभवारिः मारजित् । आसां बिम्बसारपुरयोषिताम् । मनोभवं कामविकारम् । अजीजनत् अजनयत् । विरोधपरिहारः पूर्ववत् ॥ ४४ ॥

तत्र भिक्षां समादाय शिक्षापादविचक्षणः ।
तदभ्यर्णगतं तूर्णं शिलोच्चयमशिश्रियत् ॥ ४५ ॥

व्या ॥ तत्रेति । शिक्षापादविचक्षणः शिक्षायाः तपोऽभ्यासस्य आपादे संपादने विचक्षणः कुशलः । तदभ्यर्णगतम्— तस्य बिम्बसारपुरस्य अभ्यर्णं गतं संनिहितम् । शिलोच्चयं पर्वतम्; 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः ॥ ४५ ॥

अथ पञ्चभिः पद्यैस्तमेव पर्वतं कुलकेन विशिनष्टि—

उपकण्ठकलालापकालकण्ठमनोहरम् ।
कण्ठीरवकराघातचूर्णीकृतगजाकुलम् ॥ ४६ ॥

व्या ॥ उपकण्ठेत्यादि । उपकण्ठकलालापकालकण्ठमनोहरम्— उपकण्ठे समीपे कला मनोहरा आलापा येषां तैः कालकण्ठैः नीलकण्ठैः मयूरैः मनोहरम् । कण्ठीरवकराघातचूर्णीकृतगजाकुलम्—

कण्ठीरवाणां सिंहानां कराघातैः हस्तताडनैः चूर्णीकृतैः श्लथगात्रैः गजैः आकुलम् ; 'कण्ठीरवो गजरिपुः' इत्यमरः ॥ ४६ ॥

वेतण्डशुण्डादण्डाभकुण्डलीश्वरमण्डितम् ।
शिखण्डिमण्डलारब्धताण्डवं पाण्डराह्वयम् ॥ ४७ ॥

व्या ॥ वेतण्डेत्यादि । वेतण्डशुण्डादण्डाभकुण्डलीश्वरमण्डितम्—वेतण्डानां गजानां शुण्डादण्डानाम् आभेव आभा येषां तैः कुण्डलीश्वरैः सर्पश्रेष्ठैः मण्डितम् अलंकृतम् ; 'वेतण्डः करटी गजः' इति त्रिकाण्डशेषः ; 'शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोः' इति विश्वः ; 'कुण्डली गूढपाच्चक्षुःश्रवाः' इत्यमरः । शिखण्डिमण्डलारब्धताण्डवम्—शिखण्डः बर्हम् एषामस्तीति शिखण्डिनो मयूराः तेषां मण्डलेन आरब्धं प्रक्रान्तं ताण्डवं यस्मिन् तम् ; 'शिखण्डो बर्हचूडयोः' इति हेमचन्द्रः । पाण्डराह्वयं पाण्डरनामकम् ॥ ४७ ॥

विशालशिखरोद्देशविश्रान्तजलदाध्वगम् ।
विहरन्मत्तमातङ्गपुनरुक्तमहोपलम् ॥ ४८ ॥

व्या ॥ विशालेत्यादि । विशालशिखरोद्देशविश्रान्तजलदाध्वगम्—विशाले शिखरोद्देशे शृङ्गदेशे विश्रान्ताः जलदाः मेघा एव अध्वगाः पथिकाः यस्य तम् । विहरन्मत्तमातङ्गपुनरुक्तमहोपलम्—विहरद्भिः क्रीडद्भिः मत्तमातङ्गैः मत्तगजैः पुनरुक्ताः द्विगुणिताः महोपलाः बृहच्छिलाः यस्मिन् तम् ॥ ४८ ॥

विशङ्कटशिलाकोटिपाटिताम्बरकोटरम् ।
पञ्चास्यपाणिपर्यस्तगजमौक्तिकविस्तृतम् ॥ ४९ ॥

---

[1] ख. M.

व्या ॥ विशङ्कटेत्यादि । विशङ्कटशिलाकोटिपाटिताम्बरकोटरम्— विशङ्कटाभिः पृथुभिः शिलाकोटिभिः पाषाणाग्रैः पाटितं विदारितम् अम्बरमेव कोटरं वृक्षादिरन्ध्रं यस्य तम्; 'निष्कुहः कोटरं वा ना' इत्यमरः । पञ्चास्यपाणिपर्यस्तगजमौक्तिकविस्तृतम् —पञ्चानि विस्तृतानि आस्यानि येषां तेषां सिंहानां पाणिभिः हस्तैः पर्यस्तैः विकीर्णैः गजानां मौक्तिकैः मुक्तासमूहैः विस्तृतम् आच्छादितम् ॥ ४९ ॥

निर्झरीपूरनिर्धौतकलधौतशिलातलम् ।
मेखलोपान्तविलसत्पुलिन्दपृतनापतिम् ॥ ५० ॥

व्या ॥ निर्झरीत्यादि । निर्झरीपूरनिर्धौतकलधौतशिलातलम् निर्झरीणां गिरिनदीनां पूरेण प्रवाहेण निर्धौतं क्षालितं कलधौतशिलातलं स्वर्णशिलातटं यस्य तम्; 'कलधौतं रूप्यहेम्नोः' इत्यमरः । मेखलोपान्तविलसत्पुलिन्दपृतनापतिम् मेखलाया गिरिनितम्बस्य उपान्ते समीपे विलसन् पुलिन्दपृतनायाः किरातसेनायाः पतिः यस्य ताम्; 'मेखलाद्रिनितम्बे स्याद्रशनाखड्गबन्धयोः' इति हेमचन्द्रः॥५०॥

तटाके तस्य सिद्धार्थः स्नात्वा निकटवर्तिनि ।
स्थित्वा तटशिलापट्टे भिक्षान्नरसमन्वभूत् ॥ ५१ ॥

व्या ॥ तटाक इति । तटाके सरसि । तस्य पाण्डराद्रेः । तटशिलापट्टे तटस्थितशिलाफलके । भिक्षान्नरसं भिक्षासंपादितान्नरसम् ॥ ५१ ॥

अपरेद्युर्विनिर्गत्य तस्मादेष पुरान्तरे ।
पिण्डपातविधिं कृत्वा प्रापदभ्यर्णकाननम् ॥ ५२ ॥

व्या ॥ अपरेद्युरिति । अपरेद्युः अन्यस्मिन्नहनि । विनिर्गत्य निष्क्रम्य । तस्मात् पाण्डरपर्वतात् । पुरान्तरे अन्यत् पुरं तस्मिन् ।

पिण्डपातविधिम्—पिण्डस्य भिक्षान्नस्य पातविधिम् उदरे पातनकर्म ; भिक्षान्नभोजनमित्यर्थः । अभ्यर्णकाननं सन्निहितवनम् ॥ ९२ ॥

तटाकनिकटे नद्यास्तटे शैले च कानने ।
निवसन् दिवसानेष निन्ये मान्यो बहूनपि ॥ ५३ ॥

व्या ॥ तटाकेत्यादि । तटाकनिकटे सरःसमीपे । नद्यास्तटे नदीतीरे । निन्ये अनयत । मान्यः पूज्यः ॥ ९३ ॥

तपोवनेषु धन्येषु दुःसाधानि तपांस्यपि ।
चचार धीरहृदयः संसारक्लेशशान्तये ॥ ५४ ॥

व्या ॥ तपोवनेष्विति । धन्येषु सिद्धार्थसंबन्धरूपधनं लब्धवत्सु ; महाभाग्यवत्सु इत्यर्थः । दुःसाधानि इतरैः साधयितुमशक्यानि । चचार अन्वतिष्ठत् । संसारक्लेशशान्तये—संसारे ये क्लेशाः जराम-रणादयः तेषां शान्तये निवृत्त्यै ॥ ९४ ॥

अप्राप्य निर्वाणपदं दुश्चरैश्चरितैरपि ।
को वाभ्युपायस्तस्यार्थे भवेदित्याकुलोऽभवत् ॥ ५५ ॥

व्या ॥ अप्राप्येति । निर्वाणपदं मुक्तिपदम् । दुश्चरैः आचरितु-मशक्यैः । चरितैः अनुष्ठानैः ; भावे क्तः । अभ्युपायः साधनम् । तस्य मुक्तिपदस्य । अर्थे विषये ; 'अर्थो विषयार्थकारणवस्तुषु' इति मेदिनी । आकुलः व्यग्रः ॥ ९५ ॥

एकदा पारमीभाग्यपरिपाकप्रकाशनम् ।
स्वप्नपञ्चकमद्राक्षीत्सुचरित्रनिधिः[1] प्रगे[2] ॥ ५६ ॥

---

[1] सुधीः. O. [2] प्रभुः. M.

व्या ॥ एकदेति । पारमीभाग्यपरिपाकप्रकाशनम्—परमस्य भावः पारमी; 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति भावे ष्यञि षित्वान्ङीषि 'हलस्तद्धितस्य' इति यलोपे रूपम् । तस्यै यद्भाग्यमदृष्टविशेषः तस्य परिपाकस्य फलोन्मुखत्वस्य प्रकाशनं सूचकम् । स्वप्नपञ्चकं पञ्च स्वप्नान् । प्रगे प्रातःकाले; 'प्रगे प्रातः प्रभाते' इत्यमरः ॥ ९६ ॥

दृष्ट्वावबुध्य स्वप्नार्थं प्रत्यवेत्य विचक्षणः ।
निश्चिकायाहमद्यैव निर्वृतिं प्राप्नुयामिति ॥ ९७ ॥

व्या ॥ दृष्ट्वेति । दृष्ट्वा स्वप्नमिति शेषः । अवबुध्य जागरित्वा । स्वप्नार्थं स्वदृष्टस्वप्नप्रयोजनम् । प्रत्यवेत्य ज्ञात्वा । निश्चिकाय निरचिनोत् । निर्वृतिं निर्वाणम् ॥ ९७ ॥

कृत्वा दिनमुखाचारं भिक्षावेलां प्रतीक्ष्य सः ।
आसांचक्रे वटस्याधः पूजाविहितसत्कृतेः ॥ ९८ ॥

व्या ॥ कृत्वेति । दिनमुखाचारं दिनमुखे प्रत्यूषे यः आचारः कर्म तम् । वेलां समयम् । वटस्य न्यग्रोधस्य; 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । अधः अधःप्रदेशे । पूजाविहितसत्कृतेः—पूजाभिः विहिता सत्कृतिः यस्य तस्य ॥ ९८ ॥

अथ काचिद्विशालाक्षी देवतां तन्निवासिनीम् ।
अधिकृत्य तदा निन्ये पायसं प्रार्थनापरा ॥ ९९ ॥

व्या ॥ अथेति । अथ वटमूलस्थित्यनन्तरम् । तन्निवासिनीं वटवृक्षाधिष्ठिताम् । अधिकृत्य उद्दिश्य । प्रार्थनापरा अभीप्सितसिद्धियाचनापरा ॥ ९९ ॥

तच्छङ्कयैव सा तस्मै ददौ पात्रेण पायसम् ।
तदादाय महासत्त्वो ययौ नैरञ्जरातटम् ॥ ६० ॥

व्या ॥ तदित्यादि । तच्छङ्कयैव वटाधिष्ठितदेवतासंदेहेनैव । सा वनिता । तस्मै सिद्धार्थाय । पात्रेण; उपलक्षितमिति शेषः । तत् पायसम् । महासत्त्वः महाव्यवसायः; 'सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः' इति हेमचन्द्रः । नैरञ्जरातटं नैरञ्जरानदीतीरम् ॥ ६० ॥

तस्याः शरन्निशाकाशविमले सलिले मुनिः ।
स्नात्वा सुवर्णपात्रस्थं बुभुजे पायसं बुधः ॥ ६१ ॥

व्या ॥ तस्या इति । तस्याः नैरञ्जरानद्याः । शरन्निशाकाशविमले—शरन्निशायां शारद्यां रात्रौ आकाशवत् विमले । बुभुजे अभ्यवाहरत् ॥ ६१ ॥

ततः सप्तभिः पद्यैः सालकाननं वर्णयति—

ततः किसलयालोकबालातपविलासिनि ।
मनोज्ञकोकिलालापवाचालहरिदञ्चले ॥ ६२ ॥

व्या ॥ तत इति । ततः पायसभोजनानन्तरम् । किसलयालोकबालातपविलासिनि —किसलयानां पल्लवानामालोकः प्रकाश एव बालातपः तेन विलसतीति तस्मिन् । मनोज्ञकोकिलालापवाचालहरिदञ्चले—मनोज्ञैः कोकिलालापैः पिकध्वनिभिः वाचालानि मुखराणि हरिदञ्चलानि दिगन्तानि यस्य तस्मिन् ॥ ६२ ॥

मन्दानिलाधूतलताडोलादुर्ललितालिनि ।
बालचूताङ्कुरास्वादमोदमानवनप्रिये ॥ ६३ ॥

व्या ॥ मन्देत्यादि । मन्दानिलाधूतलताडोलादुर्ललितालिनि—मन्दानिलेन आधूतासु कम्पितासु लतास्वेव डोलासु दुर्ललिताः गर्विताः अलयः यस्मिंस्तस्मिन् । बालचूताङ्कुरास्वादमोदमानवनप्रिये—बालचूताङ्कुराणां नव्यचूतपल्लवानामास्वादेन मोदमानाः तुष्यन्तः वनप्रियाः पिकाः यस्मिंस्तस्मिन्; 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः ॥ ६३ ॥

मन्दारकोरकस्यन्दिमकरन्दसुगन्धिनि ।
मदगन्धवहस्पन्दकन्दलीकृतकौतुके ॥ ६४ ॥

व्या ॥ मन्दारेत्यादि । मन्दारकोरकस्यन्दिमकरन्दसुगन्धिनि—मन्दारकोरकेभ्यः मन्दारकलिकाभ्यः स्यन्दिभिः प्रवहद्भिः मकरन्दैः सुगन्धिनि सुरभिणि । मदगन्धवहस्पन्दकन्दलीकृतकौतुके—मदगन्धवहस्य मदजनकवायोः स्पन्देन स्पर्शेन कन्दलीकृतं वर्धितं कौतुकं संतोषः यस्मिंस्तस्मिन् ॥ ६४ ॥

उत्फुल्लमञ्जरीपुञ्जपिञ्जरीकृतसत्पथे ।
भ्रमद्भ्रमरझङ्कारहुङ्कारचकिताध्वगे ॥ ६५ ॥

व्या ॥ उत्फुल्लेत्यादि । उत्फुल्लमञ्जरीपुञ्जपिञ्जरीकृतसत्पथे—उत्फुल्लेन विकचेन मञ्जरीपुञ्जेन पुष्पस्तबकराशिना पिञ्जरीकृतः पिङ्गलीकृतः सत्पथः आकाशमार्गः यस्य तस्मिन् । भ्रमद्भ्रमरझंकारहुंकारचकिताध्वगे—भ्रमतां भ्रमराणां झंकारादेव हुंकारात् चकिता भीता अध्वगाः पान्था यस्मिंस्तस्मिन् ॥ ६५ ॥

विहङ्गपक्षविक्षिप्तपरागभरपांसुले ।
माकन्दमधुसंदोहजम्बालितमहीतले ॥ ६६ ॥

व्या ॥ विहङ्गेत्यादि । विहङ्गपक्षविक्षिप्तपरागभरपांसुले—विहङ्गानां पक्षिणां पक्षैः विक्षिप्तेन विकीर्णेन परागभरेण धूलीभारेण पांसुले धूसरे । माकन्दमधुसंदोहजम्बालितमहीतले—माकन्दानां चूतानां मधुसंदोहेन मधुप्रवाहेण जम्बालितं कर्दमितं महीतलं भूप्रदेशो यस्मिंस्तस्मिन् ॥ ६६ ॥

प्रफुल्लसुमनोवल्लीमतल्लीयुतमारुते ।
वसन्तकालसामन्तसाम्राज्यमणिमण्डपे ॥ ६७ ॥

व्या ॥ प्रफुल्लेत्यादि । प्रफुल्लसुमनोवल्लीमतल्लीयुतमारुते—प्रफुल्लाः विकचाः सुमनसः पुष्पाणि यासां ताभिः वल्लीमतल्लीभिः लताश्रेष्ठैः युतः संगतः मारुतः यस्मिंस्तस्मिन् । वसन्तकालसामन्तसाम्राज्यमणिमण्डपे—वसन्तकाल एव सामन्तः संनिहितराजः तस्य यत्साम्राज्यम् आधिपत्यं तस्य मणिमण्डपे ॥ ६७ ॥

तालीतमालहिन्तालबहुले सालकानने ।
स्थित्वा माध्यंदिनं तापं निनाय नरनायकः ॥ ६८ ॥

व्या ॥ तालीत्यादि । तालीतमालहिन्तालबहुले तालादिवृक्षविशेषपूर्णे । सालकानने सालवृक्षाणां वने । माध्यंदिनं मध्याह्नभवम् । तापम् उष्णम् ।निनाय दूरीचकार ॥ ६८ ॥

दिनावसाने संप्राप्ते याममात्रावधौ ततः ।
उत्थाय भगवान् बोधिं प्रपेदे प्राज्यविक्रमः ॥ ६९ ॥

व्या ॥ दिनावसान इति । दिनावसाने सायंकाले । याममात्रावधौ—याम एव याममात्रम् अवधिः यस्य तस्मिन् । बोधिम् अश्वत्थम् ;

'पिप्पलो बोधिरश्वत्थः' इति रत्नकोशः। प्राज्यविक्रमः प्रभूतपराक्रमः; 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः ॥ ६९ ॥

ब्रह्मणोपहितान् दर्भानादाय निजपाणिना।
चिक्षेप देशिकवरः प्राच्ये बोधिमहीतले ॥ ७० ॥

व्या ॥ ब्रह्मणेति । उपहितान् आनीतान् । प्राच्ये प्राग्भवे। बोधिमहीतले अश्वत्थभुवि ॥ ७० ॥

तत्र कन्दर्पदर्पाणामभेद्यमतिकोमलम्।
अपराजितपर्यङ्कमाविरासीन्महासनम् ॥ ७१ ॥

व्या ॥ तत्रेति । तत्र बोधितलप्राच्यभागे। कन्दर्पदर्पाणां मदनाहङ्कारैः; 'कृत्यानां कर्तरि वा' इति षष्ठी। अभेद्यं भेदयितुमशक्यम्। अपराजितपर्यङ्कम्—अपराजितः अजितः पर्यङ्कः आसनविशेषो यस्मिंस्तत् ॥ ७१ ॥

आरुरोहासनं तुङ्गमनङ्गरिपुमद्भुतम्।
अंशुमानिव पूर्वाद्रिमशेषजनबोधकः ॥ ७२ ॥

व्या ॥ आरुरोहेति । तुङ्गम् उन्नतम् । अनङ्गरिपुं मदनशत्रुम्; निर्वेदजनकमित्यर्थः। अंशुमान् सूर्यः । अशेषजनबोधकः—अशेषजनानां सर्वजनानां बोधकः अज्ञाननिवर्तकः निद्रानिवर्तकश्च ॥ ७२ ॥

आरूढबोधिपर्यङ्कमभङ्गुरगुणं सुराः।
अमुमारेभिरे स्तोतुमवाङ्मनसगोचरम् ॥ ७३ ॥

व्या ॥ आरूढेत्यादि । आरूढबोधिपर्यङ्कम्—आरूढः बोधिपर्यङ्कः बोधिमूलस्थ पर्यङ्कः येन तम्। अभङ्गुरगुणम्—अभङ्गुराः

अनश्वराः नित्या इति यावत्, गुणाः यस्य तम्। अवाङ्मनसगोचरम्—वाक् च मनश्च वाङ्मनसे तयोः गोचरः विषयः न भवतीति तादृशम् ॥ ७३ ॥

अथाष्टभिः पद्यैः स्तोत्रप्रकारमाह—

नमः [1]सुगुणमाणिक्यसिन्धवे रविबन्धवे ।
नमः संसारपाथोधिसेतवे मुनिकेतवे ॥ ७४ ॥

व्या ॥ नम इति । सुगुणमाणिक्यसिन्धवे—सुगुणानामेव माणिक्यानां रत्नानां सिन्धवे समुद्राय; 'सिन्धुः समुद्रे नद्यां च' इति विश्वः । रविबन्धवे अर्कबन्धवे; तद्वंश्यत्वात्। संसारपाथोधिसेतवे—संसार एव पाथोधिः सागरः तस्य सेतवे; उत्तारकाय । मुनिकेतवे मुनिश्रेष्ठाय ॥ ७४ ॥

नमः सकलसंक्लेशहारिणे गुणहारिणे ।
नमः समस्ततत्त्वार्थवेदिनेऽद्वयवादिने ॥ ७५ ॥

व्या ॥ नम इति । सकलसंक्लेशहारिणे—सकलान् संक्लेशान् दुःखानि हरतीति तस्मै । गुणहारिणे—गुणैः हारिणे मनोज्ञाय; 'चारु हारि रुचिरम्' इति हेमचन्द्रः । समस्ततत्त्वार्थवेदिने सकलतत्त्वार्थज्ञाय । अद्वयवादिने बुद्धाय; 'अद्वयवादी विनायकः' इत्यमरः ॥ ७५ ॥

करुणापूरलहरीपरीवाहितचक्षुषे ।
भागधेयनिधानाय भगवन् भवते नमः ॥ ७६ ॥

---

[1] सद्गुण. M.

व्या ॥ करुणेत्यादि । करुणापूरलहरीपरीवाहितचक्षुषे—करुणापूरस्य दयारसप्रवाहस्य लहरीभिः महोर्मिभिः परीवाहिते परीवाहवत् जलोच्छ्वासवत्कृते चक्षुषी यस्य तस्मै; 'तस्मिंस्त्वेव महत्युर्मि[1] ऊर्मिः कल्लोल उल्लोलो लहर्युत्कलिकेति च' इति वैजयन्ती। भागधेयनिधानाय भाग्यनिधये ॥ ७६ ॥

कन्दर्पदर्पनिर्भेदकर्मठस्त्वं न चापरः।
पञ्चाननं विना को हि कुञ्जरं शासितुं क्षमः ॥ ७७ ॥

व्या ॥ कन्दर्पेत्यादि । कन्दर्पदर्पनिर्भेदकर्मठः—कन्दर्पदर्पस्य मन्मथगर्वस्य निर्भेदे भेदने कर्मठः कर्मशूरः; 'कर्मशूरस्तु कर्मठः' इत्यमरः; कर्मणि घटते इति विग्रहः; जितेन्द्रिय इत्यर्थः । पञ्चाननं सिंहम् । शासितुं हन्तुम् ॥ ७७ ॥

शूरस्त्वमेव दुर्वारगर्वतीर्थिकमर्दने ।
मन्दरेण विना सिन्धुं मथितुं केन पार्यते ॥ ७८ ॥

व्या ॥ शूर इति । दुर्वारगर्वतीर्थिकमर्दने दुर्वारः गर्वः येषां तेषां तीर्थिकानां मतान्तराचार्याणां मर्दने भञ्जने। पार्यते शक्यते ॥ ७८ ॥

चुलुकीकरणे शूरस्त्वमेव भववारिधेः ।
कुम्भयोनिं विना को हि कोविदः सिन्धुचूषणे ॥ ७९ ॥

व्या ॥ चुलुकीत्यादि । चुलुकीकरणं आचमने । भववारिधेः संसारसागरस्य । कुम्भयोनिम्—कुम्भः कलशः योनिः उत्पत्तिस्थानं यस्य तम्, अगस्त्यम् । कोविदः समर्थः; 'सन् सुधीः कोविदो बुधः' इत्यमरः । सिन्धुचूषणे सागरपाने ॥ ७९ ॥

---

[1] शा॰ ८.

कुशलोऽत्र भवानेव क्षोणीवलयबोधने ।
को वा विभुर्विना चन्द्रं कुमुदाकरहासने ॥ ८० ॥

व्या ॥ कुशल इति । कुशलः समर्थः; 'कृती कुशल इत्यपि' इत्यमरः । अत्रभवान् पूज्यः त्वम् । क्षोणीवलयबोधने—क्षोणीवलयस्य भूमण्डलस्य, तत्स्थजनस्येति यावत्, बोधने ज्ञानोपदेशे । कुमुदाकरहासने—कुमुदाकरस्य कुमुदिन्याः हासने विकचीकरणे ॥ ८० ॥

भवक्लेशं त्वमेवेश निःशेषयितुमीशिषे ।
हर्तुमन्यः किमीशीत हरिदश्वादृते तमः ॥ ८१ ॥

व्या ॥ भवेत्यादि । भवक्लेशं संसारदुःखम् । निःशेषयितुं निःशेषं कर्तुम्; विनाशयितुमित्यर्थः । ईशिषे प्रभवसि । ईशीत प्रभवेत् । हरिदश्वादृते सूर्यं विना । तमः अन्धकारम् ॥ ८१ ॥

एताभिरेषां स्तुतिभिरेधमानगुणोदयम् ।
बोधिमूलतलारूढं बुद्धं शुश्राव मन्मथः ॥ ८२ ॥

व्या ॥ एताभिरिति । एषां देवानाम् । एधमानगुणोदयम्—एधमानः वर्धमानः गुणस्य उदयः आविर्भावो यस्य तम् । बोधिमूलतलारूढम्—बोधिमूलतलम् अश्वत्थमूलदेशम् आरूढम् ॥ ८२ ॥

श्रुत्वा मनोभूः क्षुभितान्तरात्मा
विरक्तबुद्धापशदं विजेतुम् ।
को वाऽभ्युपायो भुवने मम स्या-
दित्याशु चिन्ताज्वरनि[1]र्दुतोऽभूत् ॥ ८३ ॥

इति श्रीबुद्धघोषविरचिते पद्यचूडामणिनाम्नि महाकाव्ये नवमः सर्गः ॥

---

[1] जर्जरो. M.

व्या ॥ श्रुत्वेति । क्षुभितान्तरात्मा—क्षुभितः कलुषितः अन्तरात्मा अन्तःकरणं यस्य सः । विरक्तवृद्धापशदम्—विरक्तो निःस्पृहः यः वृद्धापशदः वृद्धनीचः तम्; 'निहीनोऽपशदो जाल्मः' इत्यमरः । अभ्युपायः सामादिः; 'उपायः सामभेदादौ' इति मेदिनी । चिन्ताज्वरनिर्दुतः—चिन्ताज्वरेण चिन्तारूपज्वरेण निर्दुतः उपतप्तः ॥ ८३ ॥

इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां नवमः सर्गः ॥

---

## दशमः सर्गः

अत्रान्तरे निबिडमास्थितबोधिमूल-
मावेगवानभिषिषेणयिषुर्मुनीन्द्रम् ।
अध्यास्य मत्तकरिणं गिरिमेखलाख्य-
माहूतसैन्यनिवहो निरगादनङ्गः ॥ १ ॥

व्या ॥ अत्रेति । अत्रान्तरे बुद्धस्य देवकृतस्तुत्यवसरे । निबिडम् क्रियाविशेषणम् ; अभिषिषेणयिषुरित्यत्रान्वेति आस्थितबोधिमूलम्—आस्थितम् आश्रितं बोधिमूलम् अश्वत्थमूलं येन तम् । आवेगवान् संभ्रमवान् ; 'आटोपावेगसंरम्भसंभ्रमास्तु' इति वैजयन्ती । अभिषिषेणयिषुः अभिषेणयितुं सेनया अभिगन्तुमिच्छुः इत्यर्थः ; 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः । अध्यास्य आरुह्य । मत्तकरिणं मत्तगजम् । गिरिमेखलाख्यम्—गिरिमेखल इति आख्यायस्य तम् । आहूतसैन्यनिवहः—आहूतः आकारितः सैन्यनिवहः सेनासमूहः येन सः । निरगात् निश्चक्राम । इन्द्रवज्रा वृत्तम् ॥ १ ॥

निर्गत्य निह्नुतदिगन्तरकन्दरेण
निर्घातभीमजयदुन्दुभिनिस्वनेन ।
संत्रासिताखिलजनेन महाबलेन
साकं शनैरवततार धरामनङ्गः ॥ २ ॥

व्या ॥ निर्गत्येति । निह्नुतदिगन्तरकन्दरेण—निह्नुताः आच्छादिताः दिगन्तराण्येव कन्दराः गुहाः येन तेन ; 'दरी तु कन्दरो वास्त्री' इत्यमरः । निर्घातभीमजयदुन्दुभिनिस्वनेन—निर्घातवत् वाय्वभिघातशब्दवत् भीमो भयंकरः जयदुन्दुभिनिस्वनः जयभेरीशब्दः यस्य तेन ; 'वातापातस्तु निर्घातः' इति वैजयन्ती । संत्रासिताखिल-

जनेन—संत्रासितः उद्वेजितः अखिलजनः येन तेन । धरां भूमिम् ॥ २ ॥

संभ्रान्तशाङ्खिकशताननपूर्यमाणो
मारस्य सांनहनिको वरशङ्खघोषः ।
संग्रामशश्वदुपलालितपाञ्चजन्य-
नादस्य न व्यसनमब्धिशयस्य चक्रे ॥ ३ ॥

व्या ॥ संभ्रान्तेत्यादि । संभ्रान्तशाङ्खिकशताननपूर्यमाणः—संभ्रान्तानां परिभ्रान्तानां शाङ्खिकानां शङ्खध्मानं शिल्पं येषां तेषां शतस्य आननैः पूर्यमाणः आध्मायमानः । सांनहनिकः—सन्नहनं युद्धसंनाहः प्रयोजनमस्येति सांनहनिकः । संग्रामशश्वदुपलालितपाञ्चजन्यनादस्य—संग्रामे युद्धे शश्वत् असकृत् उपलालितः आदृतः यः पाञ्चजन्यनादः शङ्खध्वनिः येन तस्य । व्यसनमासक्तिम्; 'व्यसनं त्वशुभे सक्तौ' इति मेदिनी । अब्धिशयस्य—अब्धौ शेत इति तस्य; विष्णोः । मदनशङ्खघोषः पाञ्चजन्यनादमपि विजयते इति भावः ॥ ३ ॥

निस्साणघोर[1]निनदो निखिलान्तरिक्ष-
कुक्षिंभरिः प्रसृमरो मकरध्वजस्य ।
दम्भोलिघोषजनितश्रवणोत्सवस्य
देवस्य केवलमजायत दत्तहर्षः ॥ ४ ॥

व्या ॥ निस्साणेत्यादि । निस्साणघोरनिनदः—निस्साणस्य जयभेर्याः घोरः भयंकरः निनदो ध्वनिः । निखिलान्तरिक्षकुक्षिंभरिः—निखिलेन अन्तरिक्षेण कुक्षिं बिभर्तीति तादृशः; गगनव्यापीत्यर्थः ।

---

[1] घोष. C.

प्रसृमरः प्रसरणशीलः; प्रपूर्वात् सरतेः 'सृघस्यदः क्मरच्' इति क्मरचि रूपम्। दम्भोलिघोषजनितश्रवणोत्सवस्य—दम्भोलेः अशनेः घोषेण जनितः उत्पादितः श्रवणोत्सवः श्रोत्रानन्दः यस्य तस्य। देवस्य इन्द्रस्य। केवलम् अत्यन्तम्। दत्तहर्ष—दत्तः हर्षः येन सः; निस्साणध्वनिः इन्द्रस्यापि विस्मयमकरोदिति भावः॥ ४॥

सप्तभिः पद्यैः चतुरङ्गबलं कुलकेन वर्णयति—

वेतण्डमण्डलविडम्बितचण्डवायु-
वेगावखण्डितकुलाचलगण्डशैलम्।
संवर्तसागरसमुद्गतभङ्ग तुङ्ग-
त्वङ्गत्तुरङ्गमतरङ्गितसर्वदिक्कम्॥ ५॥

व्या॰॥ वेतण्डेत्यादि। वेतण्डमण्डलविडम्बितचण्डवायुवेगावखण्डितकुलाचलगण्डशैलम्—वेतण्डमण्डलेन गजसमूहेन विडम्बिताः अनुकृताः चण्डवायोः प्रबलमारुतस्य वेगेन अवखण्डिताः कुलाचलानां कुलाद्रीणां गण्डशैलाः स्थूलशिलाः यस्य तत्; 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः। संवर्तसागरसमुद्गतभङ्गतुङ्गत्वङ्गत्तुरङ्गमतरङ्गितसर्वदिक्कम्—संवर्ते प्रलये सागरात् समुद्गताः ये भङ्गा तरङ्गाः तद्वत् तुङ्गाः त्वङ्गन्तः चलन्तश्च ये तुरङ्गमाः तैः तरङ्गिताः व्याप्ताः सर्वा दिशः यस्य तत्; 'भङ्गस्तरङ्ग ऊर्मिः', 'संवर्तः प्रलयः कल्पः' इति चामरः॥ ५॥

आढौकमानरथमण्डलचक्रनेमि-
धाराविदारितधरातलसंनिवेशम्।

---

[1] तङ्गभङ्ग॰ M.

पादातपादपतनाशनिपात्यमान-
पातालसंतमससान्द्ररजोऽन्धकारम् ॥ ६ ॥

व्या ॥ आढौकमानेत्यादि । आढौकमानरथमण्डलचक्रनेमिधारा-विदारितधरातलसंनिवेशम् — आढौकमानस्य गच्छतः रथचक्रस्य नेमि-धाराभिः प्रधिरेखाभिः; 'नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः; विदारितः विभिन्नः धरातलसंनिवेशः भूप्रदेशविन्यासः यस्य तत् । पादातपादपतनाशनिपात्यमानपातालसंतमससान्द्ररजोऽन्धकारम् — पदा-तीनां समूहः पादातं तस्य पादपतनेन चरणाघातेनैव अशनिना दम्भोलिना पात्यमानात् विदार्यमाणात् पातालात् उत्थितं संतमसमिव स्थितं सान्द्रं निबिडं रज एव अन्धकारः यस्य तत् ॥ ६ ॥

आधूयमानकरवालकरालकाल-
च्छायासमुच्चलनशाद्वलितान्तरिक्षम् ।
हेलावकुण्डलितकार्मुककाननज्या-
विष्फारवेगबधिरीकृतविश्वलोकम् ॥ ७ ॥

व्या ॥ आधूयमानेत्यादि । आधूयमानकरवालकरालकालच्छाया समुच्चलनशाद्वलितान्तरिक्षम् — आधूयमानानां कम्प्यमानानां कर-वालानां खड्गानां याः कराला: दन्तुराः कालच्छायाः कृष्णकान्तयः तासां समुच्चलनेन प्रसरणेन शाद्वलितं शादा अस्मिन् सन्तीति तादृशं कृतम् अन्तरिक्षं यस्य तत्; 'करवालनिस्त्रिंशकृपाणखड्गाः' 'करालो रौद्रतुङ्गोरुव्रणतैलेषु दन्तुरे' 'शाद्वलः शादहरिते' इति हेमचन्द्रामरौ । हेलावकुण्डलितकार्मुककाननज्याविष्फारवेगबधिरीकृत-विश्वलोकम् — हेलया अवकुण्डलितस्य वलयीकृतस्य कार्मुककाननस्य धनुःपुञ्जस्य ज्यानां मौर्वीणां विष्फारवेगेन धनुष्टङ्कारबलेन बधिरीकृतः विश्वलोकः यस्य तत् ॥ ७ ॥

आस्फालिताप्रतिमभैरवभेरिघोर-
कोलाहलध्वनियथार्थनभोऽभिधानम् ।
शुण्डाकरण्डविवरप्रवितन्यमान-
शूत्कारशीकरकरालितमेघमार्गम् ॥ ८ ॥

व्या ॥ आस्फालितेत्यादि । आस्फालिताप्रतिमभैरवभेरिघोरकोलाहलध्वनियथार्थनभोऽभिधानम्—आस्फालितानां ताडितानाम् अप्रतिमानाम् असदृशानां भैरवाणां भयंकराणां भेरीणां घोरेण दारुणेन कोलाहलध्वनिना उच्चघोषेण यथार्थम् अन्वर्थम् नभसः अभिधानं वाचकशब्दः शब्दगुण इति शब्दः यस्य तत्; 'भैरवं दारुणं भीषणम्'—इत्यमरः । शुण्डाकरण्डविवरप्रवितन्यमानशूत्कारशीकरकरालितमेघमार्गम्—शुण्डाकरण्डस्य करिहस्तपुटस्य 'शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोः' इति विश्वः, विवरात् सुषिरात् प्रवितन्यमानानां विस्तार्यमाणानां शूत्काराणां ध्वनिविशेषाणां शीकरैः जलकणैः करालितः दन्तुरितः मेघमार्गः आकाशः यस्मिन् तत् ॥ ८ ॥

क्षोणीतलान्तरनिरन्तरजृम्भमाण-
धूलीनिकायचुलुकीकृतसिन्धुपूरम् ।
नासीरवीरसमुदीरितसिंहनाद-
संनाहगर्जितसमस्तगुहान्तरालम् ॥ ९ ॥

व्या ॥ क्षोणीत्यादि । क्षोणितलान्तरनिरन्तरजृम्भमाणधूलीनिकायचुलुकीकृतसिन्धुपूरम्—क्षोणीतलान्तरे भूमध्ये निरन्तरं यथा तथा जृम्भमाणैः वर्धमानैः धूलीनिकायैः रजःपुञ्जैः चुलुकीकृतः शोषितः सिन्धुपूरः सागरजलसमृद्धिः यस्य तत् । नासीरवीरसमुदीरितसिंहनादसंनाहगर्जितसमस्तगुहान्तरालम्—नासीरे सेनामुखे ये वीराः तैः

समुदीरितैः सिंहनादसंनादैः क्ष्वेलासंनादैः गर्जितं मुखरितं समरसानां गुहानाम् अन्तरालं मध्यं यस्य तत्; 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः ॥ ९ ॥

*दोधूयमानसितचामरिकानिकाय-
संपादिताद्भुतशरत्समयावतारम् ।
संरब्धपुष्पशरशासनचोद्यमान-
चक्रं क्रमेण चतुरङ्गब[1]लं चचाल ॥ १० ॥

व्या ॥ दोधूयमानेत्यादि । दोधूयमानसितचामरिकानिकायसंपादिताद्भुतशरत्समयावतारम्—दोधूयमानानां भृशं वीज्यमानानां सितानां शुक्लानां चामरिकाणां निकायेन राशिना संपादितः अद्भुतः शरत्समयस्य शरत्कालस्य अवतारः प्रवेशः यस्मिंस्तत्; श्वेतचामराणां शरत्कालिकाकाशकाशपुष्पसादृश्यात् इति भावः । संरब्धपुष्पशरशासनचोद्यमानचक्रम्—संरब्धस्य क्रुद्धस्य पुष्पशरस्य मदनस्य शासनेन आज्ञया चोद्यमानानि प्रेर्यमाणानि चक्राणि गणाः यस्य तत्; 'चक्रं प्रहरणे गणे' इति हेमचन्द्रः । चतुरङ्गबलम्—चत्वारि अङ्गानि रथगजतुरगपदातिरूपाणि यस्य तत् बलं सैन्यम्; 'बलं रूपे स्थामनि स्थौल्यसैन्ययोः' इति हेमचन्द्रः । चचाल प्रतस्थे ॥ १० ॥

---

[1] युतं. M.

* The following passage is inserted between the two halves of this stanza in the MSS. of Madura and Cochin :—

'तिर्यक्परागनिकराम्बुदकम्पमान-
शम्पायितात्मविजयध्वजचक्रवालम् ।

कल्पान्तकालघटमानघनाघनौघ
गम्भीरघोरघनगर्जितनिर्विशेषैः[1] ।
आपादितैर्मकरकेतनवाद्यकारै-
राध्मातमण्डमभवत् पटहप्रणादैः ॥ ११ ॥

व्या ॥ कल्पान्तेति । कल्पान्तकालघटमानघनाघनौघगम्भीरघोरघनगर्जितनिर्विशेषम्—कल्पान्तकाले प्रलयकाले घटमानः मिलितः यः घनाघनौघः वर्षुकमेघबृन्दः तस्य गम्भीरं मन्द्रं घोरं भयंकरं घनम् अविच्छिन्नं च यत् गर्जितं स्तनितं तस्मात् निर्विशेषैः विशेषरहितैः, तत्सदृशैरित्यर्थः ; 'वर्षुकाब्दो घनाघनः' 'घोरं भीमं भयानकम्', 'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे', स्तनितं गर्जितं मेघनिर्घोषः' इति सर्वत्रामरः । आपादितैः उत्पादितैः । मकरकेतनवाद्यकारैः—मकरकेतनस्य वाद्यकारैः वाद्यशिल्पज्ञैः । आध्मातं मुखरितम् । पटहप्रणादैः आनकशब्दैः ; 'आनकः पटहोऽस्त्री स्यात्' इत्यमरः ॥ ११ ॥

अभ्युद्गतैरमितसैन्यपरागजालै-
रन्धीकृताकुलदृशामहिपुङ्गवानाम् ।
भाविश्चकार भुवनेषु परं निपीडा-
माडम्बरः पटहजो मदनप्रयाणे ॥ १२ ॥

व्या ॥ अभ्युद्गतैरिति । अभ्युद्गतैः उत्थितैः । अमितसैन्यपरागजालैः—अमितानाम् असंख्यानां सैन्यानां सेनायां समवेतानां हस्त्यश्वादीनां परागजालैः धूलीपटलैः । अन्धीकृताकुलदृशाम्—अन्धीकृते दृष्टिशून्यीकृते आकुले दृशौ येषां तेषाम् ; । अहिपुङ्गवानाम्—पुमांसः

---

[1] विशेषम्. C.

गावः पुङ्गवाः अहिषु पुङ्गवाः सर्पश्रेष्ठाः तेषाम् ; 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका । मचर्चिका प्रकाण्डो द्वौ प्रशस्यार्थप्रकाशकाः ।' इति हेमचन्द्रः । आविश्चकार जनयामास । भुवनेषु लोकेषु, पातालादिष्वित्यर्थः । परम् अत्यन्तम् । निपीडां व्यथाम् । आडम्बरः ध्वनिः । पटहजः—पटहात् जायत इति तादृशः । सर्पाणां चक्षुःश्रवस्त्वेन रजोभिः पटहनिनादेन च चक्षुषः पीडा द्विगुणिता अभूदिति भावः ॥ १२ ॥

अत्यन्तमन्धयति दिङ्मुखमम्बुवाह-
संदोहरोचिषि चमूरजसां समूहे ।
नौका इवोद्धुरसरस्वति नष्टमार्गा
भ्रेमुर्भृशं सुरपथे सुमनोविमानाः ॥ १३ ॥

व्या ॥ अत्यन्तमिति । अन्धयति—अन्धयतीत्यन्धं तथा कुर्वति सति । दिङ्मुखं दिगारम्भभागम् । अम्बुवाहसंदोहरोचिषि—अम्बुवाहसंदोहस्य मेघवृन्दस्येव रोचिः यस्य तस्मिन् । नौकाः तरयः; नाव एव नौकाः, स्वार्थे कः; 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । उद्धुरसरस्वति—उद्गता धूः यस्य सः, उद्धुरः, अभिवृद्ध इत्यर्थः, तस्मिन् सरस्वति सागरे ; 'सरस्वान् सागरोऽर्णवः' इत्यमरः । नष्टमार्गाः अदृष्टमार्गाः । सुरपथे गगने । सुमनोविमानाः—सुमनसां देवानां विमानाः ॥ १३ ॥

वातोत्थिते महति सैनिकधूलिमध्ये
संचारिणः सुमनसां व्यरुचन् विमानाः ।
संहीरताण्डवितसागरवारिपूरे
पारिप्लवा (इव मुहुः) जगदण्डखण्डाः ॥ १४ ॥

व्या ॥ वातेत्यादि । वातोत्थिते — वातेन उत्थिते उद्गते । सुमनसां देवानाम् । संहारताण्डवितसागरवारिपूरे — संहारे प्रलयसमये ताण्डवितः, वर्धमान इति यावत्, यः सागरवारिपूरः समुद्रजलप्रवाहः तस्मिन् । पारिप्लवाः चञ्चलाः ; 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । जगदण्डखण्डाः — जगतामण्डस्य खण्डाः शकलाः ॥ १४ ॥

कल्पक्षयक्षुभितमारुतवेगभीम-
कन्दर्पसैन्यकबलीकृतभीतभीताः ।
अभ्युल्लसद्बहलरेणुभरापदेशा-
दम्भोधयो गगनमुत्पतिता इवासन् ॥ १५ ॥

व्या ॥ कल्पेत्यादि । कल्पक्षयक्षुभितमारुतवेगभीमकन्दर्पसैन्यकबलीकृतभीतभीताः — कल्पक्षये कल्पान्ते क्षुभितस्य संचलितस्य मारुतस्य वायोः वेग इव वेगो यस्य तस्य अत एव भीमस्य भयंकरस्य कन्दर्पसैन्यस्य मदनसैनिकस्य कबलीकृतात् कबलीकरणात् भीतभीताः भृशं भीताः । अभ्युल्लसद्बहलरेणुभरापदेशात् — अभ्युल्लसतामुत्पततां बहलानां सान्द्राणां रेणूनां धूलीनां भरस्य समूहस्य अपदेशात् व्याजात् । अम्भोधयः समुद्राः । गगनम् आकाशम् । उत्पतिता उद्गता आसन्निवेत्युत्प्रेक्षा ॥ १५ ॥

प्रत्यर्थिदन्तिजयसिन्धुरदन्तभिन्न-
क्ष्माभृद्गुहान्तरगता इव चान्धकाराः ।
आवव्रुरम्बरमभङ्गुरजृम्भमाणाः
सेनापरागनिकरा भ्रमराभिरामाः ॥ १६ ॥

व्या ॥ प्रत्यर्थीत्यादि । प्रत्यर्थिदन्तिजयसिन्धुरदन्तभिन्नक्ष्माभृद्गुहान्तरगताः — प्रत्यर्थिदन्तिनः शत्रुगजान् जयन्तीति तादृशानां

सिन्धुराणां गजानां दन्तैः भिन्नानां क्ष्माभृतां पर्वतानां गुहान्तराणि गुहामध्यानि गताः प्राप्ताः । अन्धकाराः तमांसि । अम्बरम् आकाशम् । अभङ्गुरजृम्भमाणाः—अभङ्गुरमविच्छिन्नं यथा तथा प्रवर्धमानाः । सेनापरागनिकराः—सेनायाः परागाणां धूलीनां निकराः समूहाः । भ्रमराभिरामाः—भ्रमरवत् अभिरामाः रमणीयाः, नीलवर्णत्वात् ॥ १६ ॥

अत्युल्बणैरमितसैन्यपरागपूरै-
रापूरितं गगनकन्दरमाबभासे ।
*आप्लाविताखिलपथैर्यमुनाप्रवाहै-
राश्लिष्यमाणमिव लावणसिन्धुमध्यम् ॥ १७ ॥

व्या ॥ अत्युल्बणैरिति । अत्युल्बणैः अभ्यधिकैः । अमितसैन्यपरागपूरैः—अमितानामसंख्यानां सैन्यानां परागपूरैः धूलीपटलैः । गगनकन्दरम् आकाशरूपगुहा । आप्लाविताखिलपथैः—आप्लावितः निर्भाज्जितः अखिलः पन्थाः यैस्तैः । आश्लिष्यमाणम् आलिङ्ग्यमानम् । लावणसिन्धुमध्यम्—लवण एव लावणः ; प्रज्ञादित्वात्स्वार्थेअण् तस्य तन्मयस्येत्यर्थः ; सिन्धोः सागरस्य मध्यम् ॥ १७ ॥

*अभ्युच्छ्रितैरवनिमांसलपांसुजालै-
रत्युल्बणं गगनमण्डलमास्तृणानैः ।
आशाङ्गना मदनसायकपातभीत-
रामुक्तनीलवनकञ्चुलिका इवासन् ॥ १८ ॥

व्या ॥ अभ्युच्छ्रितैरिति । अभ्युच्छ्रितैः अभितः उद्गतैः । अवनिमांसलपांसुजालैः—अवनेः भूमेः यानि मांसलानि प्रवृद्धानि पांसु-

* This half is omitted in the Madura MS.

जालानि तैः । अत्युल्बणम् अभ्यधिकं यथा तथा । आस्तृणानैः व्याप्नुवद्भिः । आशाङ्गनाः दिगङ्गनाः । मदनसायकपातभीतेः—मदनसायकस्य मारबाणस्य पातात् भीतेः । आमुक्तनीलघनकञ्चुलिकाः—आमुक्ताः धृताः नीला घना निबिडाः कञ्चुलिकाः कवचानि याभिस्ताः ॥ १८ ॥

धूलीभरे चुलकितार्णवतोयपूरे
स्वैरप्रचारमभितः प्रतिपद्यमाने ।
कल्पक्षयोऽयमिति कैटभजिद्भ्रमेण
भूयोऽपि विश्वमुदरे परिहर्तुमैच्छत् ॥ १९ ॥

व्या ॥ धूलीत्यादि । धूलीभरे परागभारे । चुलकितार्णवतोयपूरे—चुलकितः आचान्तः अर्णवस्य समुद्रस्य तोयपूरः जलप्रवाहः येन तस्मिन् । स्वैरप्रचारम्—स्वैरं स्वेच्छं यथा तथा प्रचारं संचारम् । अभितः समन्तात् । कल्पक्षयः प्रलयकालः । अयं रेणुव्यापनसमयः । कैटभजित् कैटभं जयतीति तादृशः, विष्णुः । परिहर्तुं लीनं कर्तुम् । विष्णोरपि धूलीपटलदर्शनेन प्रलयकालभ्रान्तिरभूत् इति भावः ॥ १९ ॥

पर्यापतत्तुरगखण्डितभूसमुत्थैः
पाथोधयः कबलिताः परुषैः परागैः ।
मत्तेभगण्डगलितैर्मदवारिपूरै-
र्भूयो बभूवुरधिकं पुनरुक्ततोयाः ॥ २० ॥

व्या ॥ पर्यापतदित्यादि । पर्यापतत्तुरगखण्डितभूसमुत्थैः—पर्यापतद्भिः परित आगच्छद्भिः तुरगैः खण्डितायाः विदीर्णायाः भुवः समुत्थैः उद्गतैः । पाथोधयः—पाथांसि जलानि एषु धीयन्त इति तादृशाः, सागराः ; 'कबन्धमुदकं पाथः' इत्यमरः । कबलिताः ग्रसिताः, शोषिता

इत्यर्थः । मत्तेभगण्डगलितैः—मत्तेभानां मत्तगजानां गण्डेभ्यः कटेभ्यः गलितैः स्नुतैः । मदवारिपूरैः—मदवारीणां मदजलानां प्रवाहैः । पुनरुक्ततोयाः—पुनरुक्तानि द्विगुणितानि तोयानि येषां ते । अश्वैरुत्पादितं समुद्रशोषणं द्विगुणमदजलपूरणेन गजैः व्यर्थीकृतमिति भावः ॥ २० ॥

अम्भोधिसम्पदवलुण्ठनकुम्भयोनि-
रभ्युद्गतो मकरकेतनसैन्यरेणुः ।
अम्भोजिनीपतिरसौ मम वैरिबन्धु-
रित्यन्तराहितरुषेव तिरश्चकार ॥ २१ ॥

व्या ॥ अम्भोधीत्यादि । अम्भोधिसंपदवलुण्ठनकुम्भयोनिः—अम्भोधिसंपदः सागरजलसमृद्धेः अवलुण्ठने अपहरणे कुम्भयोनिः अगस्त्यः । मकरकेतनसैन्यरेणुः—मन्मथसेनाधूलिः । अम्भोजिनीपतिः अम्भोजानि पद्मानि आसु सन्तीति अम्भोजिन्यः, तासां पतिः सूर्यः । मम सेनारेणोः । वैरिबन्धुः—वैरिणः सिद्धार्थस्य बन्धुः । अन्तराहितरुषा—अन्तः मनसि आहितया धृतया रुषा कोपेन । तिरश्चकार आच्छादयामास । सिद्धार्थस्य सूर्यवंश्यत्वात् मदनसेनायाः सिद्धार्थविजयाय प्रवृत्तायाः वैरिबन्धुत्वं सूर्यस्य ॥ २१ ॥

अभ्युद्गतं परिभव निजवंशकेतो-
रत्युग्रमीक्षितुमशक्त इवांशुमाली ।
कन्दर्पसैन्यघनधूलिपरम्परासु
गाढान्धकारितदिशासु तिरोबभूव ॥ २२ ॥

व्या ॥ अभ्युद्गतमिति । अभ्युद्गतम् आभिमुख्येनागतम् । निजवंशकेतोः—निजः आत्मीयः सूर्यसंबन्धी यः वंशः तस्य केतोः

प्रधानभूतस्य सिद्धार्थस्य । अंशुमाली सूर्यः । कन्दर्पसैन्यघनधूलिपरम्परासु—कन्दर्पसैन्यानां मन्मथसैन्यानां घनासु निबिडासु धूलीपरम्परासु रेणुराशिषु । गाढान्धकारितदिशासु—गाढं यथा तथा अन्धकारिताः अन्धकारवत्यः कृताः दिशाः याभिस्तासु । तिरोबभूव अन्तर्दधे ॥ २२ ॥

आतन्यमानबलरेणुघनान्धकारै-
राकम्पमानकरिकेतुशतह्रदाभिः ।
अ[1]श्वीयफेनकणिकाकरकाकदम्बै-
र्वर्षावतार इव हर्षकरो बभूव ॥ २३ ॥

व्या ॥ आतन्यमानेत्यादि । आतन्यमानबलरेणुघनान्धकारैः—आतन्यमानैः विस्तीर्यमाणैः बलस्य मदनसेनायाः रेणुभिरेव घनान्धकारैः निबिडतमोभिः । आकम्पमानकरिकेतुशतह्रदाभिः—आकम्पमानैः चञ्चलैः करिषु स्थितैः केतुभिरेव शतह्रदाभिः तटिद्भिः 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः । अश्वीयफेनकणिकाकरकाकदम्बैः—अश्वानां समूहः अश्वीयम् ; 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छः, 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः, 'अश्वीयमश्वनिवहे' इति हेमचन्द्रश्च । तस्य अश्वसमूहस्य फेनकणिकानां फेनबिन्दूनामेव करकाणां वर्षोपलानां कदम्बैः समूहैः । वर्षावतारः प्रावृडारम्भः । हर्षकरः संतोषजनकः । सेनाप्रयाणसमयः इति शेषः ॥ २३ ॥

प्रौढान्धकारितदिशावलये प्रसर्प-
त्युच्छृङ्खले रजसि रुद्धनभोऽवकाशे ।

---

[1] आश्वीय. M.

पातालल्लोक इव भूवलयो बभूव
भूसंनिवेश इव पुण्यकृतां निवासः ॥ २४ ॥

व्या ॥ प्रोढेत्यादि । प्रोढान्धकारितदिशावलये—प्रोढान्धकारितः गाढान्धकारवान् कृतः दिशावलयः दिङ्मण्डलं येन तस्मिन् । प्रसर्पति व्याप्नुवति । उच्छृङ्खले निरर्गले । रुद्धनभोऽवकाशे—रुद्धः नभोऽवकाशः गगनप्रदेशः येन तस्मिन् । पुण्यकृतां निवासः—स्वर्गः । अन्धकारस्य मृत्सम्बन्धस्य च क्रमात् पातालभूम्यसाधारणगुणत्वात् इति भावः ॥ २४ ॥

अश्वीयपाददलितादवनीतलान्ता-
दभ्युच्छ्रिते च नितरां[1] निखिले परागे ।
भूमीधराः परमभूमिधरा बभूवुः
शेषोऽपि केवलमभूत्फणमालभारी ॥ २५ ॥

व्या ॥ अश्वीयेत्यादि । अश्वीयपाददलितात्—अश्वीयस्य अश्वसमूहस्य पादैः दलितात् विदारितात् । अवनीतलान्तात् भूतलमध्यात् । भूमीधराः पर्वताः । परम् अत्यन्तम् । अभूमिधराः भूमिधरणकर्तृत्वरहिताः । भूमेः परागरूपेण उद्गतत्वात् भूमेरेवाभावेन पर्वतानां भूधारकत्वं न संबभूवेत्यर्थः । फणमालभारि—फणमालां बिभर्तीति तादृशः; 'इष्टकेषीकामालानां चिततूलभारिषु' इति मालाशब्दे ह्रस्वः । भूमेः परागरूपेणोद्गमनात् शेषशिरसि न कोऽपि भारः ॥ २५ ॥

दिग्दन्तिनां मुखपटप्रकटोपमेये
सेनापरागनिकरे सति जृम्भमाणे ।

---

[1] नितरामखिले. M.

पाथोधयः सपदि पङ्कधयस्तदासन्
पाथोधरा नभसि पङ्कधरा बभूवुः ॥ २६ ॥

व्या ॥ दिग्दन्तिनामिति । दिग्दन्तिनां दिग्गजानाम् । मुखपट-प्रकटोपमेये—मुखपटेन मुखालंकारवस्त्रेण प्रकटं व्यक्तं यथा तथा उपमातुं योग्ये; दिग्गजमुखपटतुल्ये इत्यर्थः । पाथोधयः समुद्राः । पङ्कधयः—पङ्का धीयन्ते एष्विति तादृशाः; पङ्किलाः । पाथोधराः मेघाः ॥ २६ ॥

आपीतसर्वमकराकरवारिराशे-
राशावकाशगगनेष्वमितस्य रेणोः ।
चक्राचले बहिरिव प्रसराय चक्रु-
राशागजा विवरमाहतवप्रघाताः ॥ २७ ॥

व्या ॥ आपीतेत्यादि । आपीतसर्वमकराकरवारिराशेः—आपीतः शोषितः सर्वमकराकराणां चतुःसमुद्राणां वारिराशिः जलराशिः येन तस्य । आशावकाशगगनेषु दिङ्मध्याकाशेषु । अमितस्य अपरि-च्छिन्नस्य । चक्राचले लोकालोकपर्वते । बहिरिव प्रसराय बहिर्गमना-येवेत्युत्प्रेक्षा । आहतवप्रघाताः—आहतः वप्रघातः उत्खातकेलिः यैस्ते । रेणूनामाशावकाशगगनमपर्याप्तमित्यवेक्ष्य तेषां बहिःसंचारसंपाद-नार्थमिव दिग्गजा लोकालोकपर्वते वप्रघातमकुर्वतेति भावः ॥ २७ ॥

सेनाम्बुधौ जयिपदातिमहाप्रवाहे
मग्नाः कुलक्षितिधरा इव वारणेन्द्राः ।
त्वङ्गत्तरङ्गनिवहा इव तुङ्गवाहा
नौमण्डला इव रथाः सुतरां विरेजुः ॥ २८ ॥

व्या ॥ सेनेत्यादि । सेनाम्बुधौ सेनारूपसमुद्रे । जयिपदाति-महाप्रवाहे—जयिनः जयशीलाः पदातय एव महाप्रवाहः यस्य

तस्मिन् । कुलक्षितिधराः मैनाकादयः कुलपर्वताः । वारणेन्द्राः गजेन्द्राः । त्वङ्गत्तरङ्गनिवहाः-- त्वङ्गन्तः चलन्तः ये तरङ्गनिवहाः वीचिराशयः । तुङ्गवाहाः उन्नताश्वाः । नौमण्डलाः तरणिसमूहाः ॥ २८॥

मध्ये लसन्मकरलाञ्छनदर्शनीया
मारस्य रेजुरमला जयकेतुपट्टाः ।
अम्भोनिधिं निजबलोदधिना विजित्य
बन्दीकृता इव तदीयपुरन्ध्रिवर्गाः ॥ २९ ॥

व्या ॥ मध्य इति । मध्ये सेनामध्ये । लसन्मकरलाञ्छनदर्शनीयाः---लसता प्रकाशमानेन मकरलाञ्छनेन मकराङ्केन मकरिकया च दर्शनीयाः मनोहराः । जयकेतुपट्टाः विजयध्वजचीनांशुकाः । निजबलोदधिना निजसेनासमुद्रेण । बन्दीकृताः कारागृहीताः । तदीयपुरन्ध्रिवर्गाः—तदीयानां समुद्रसम्बन्धिनीनां पुरन्ध्रीणां कुटुम्बिनीनां वर्गाः; 'दाराः स्यात्तु कुटुम्बिनी पुरन्ध्री' इत्यमरः ॥ २९ ॥

अन्तःसमुद्भवदमर्षमहाग्निजात-
धूमावलीमलिनकञ्चुकसंचिताङ्गम् ।
अत्यन्तभीषणमनेकसहस्रबाहु-
मात्मानमात्तविविधास्त्रमसावकार्षीत् ॥ ३० ॥

व्या ॥ अन्तरित्यादि । अन्तःसमुद्भवदमर्षमहाग्निजातधूमावलीमलिनकञ्चुकसंचिताङ्गम्---अन्तः हृदये समुद्भवतः जायमानात् अमर्षात् कोपादेव महाग्नेः जातया धूमावल्या मलिनेन कञ्चुकेन कवचेन संचितानि अङ्गानि यस्य तम्; 'कञ्चुको वारवाणोऽस्त्री', 'कोप-

क्रोधामर्षरोषप्रतिघाः' इति चामरः । अत्यन्तभीषणम् अतिभयङ्करम् । अनेकसहस्रबाहुम्—अनेके सहस्राणि बाहवः यस्य तम् । आत्तविविधास्त्रम्—आत्तानि गृहीतानि विविधानि अस्त्राणि येन तम् । असौ मारः ॥ ३० ॥

आप्लाविताखिलदिगन्तमहीध्ररन्ध्र-
माकृष्टकल्पविलयक्षुभितार्णवाभम् ।
आकारितं मकरकेतुरदृष्टपार-
माकारभीषणमकारयदात्मसैन्यम् ॥ ३१ ॥

व्या ॥ आप्लावितेत्यादि । आप्लाविताखिलदिगन्तमहीध्ररन्ध्रम्—आप्लावितानि संपूरितानि अखिलानां समस्तानां दिगन्तमहीध्राणां दिगन्तेषु विद्यमानानां पर्वतानां रन्ध्राणि येन तत् । आकृष्टकल्पविलयक्षुभितार्णवाभम्—आकृष्टा कल्पविलये प्रलयकाले क्षुभितस्य प्रवृद्धस्य अर्णवस्य आभा येन तत् । आकारितम् आहूतम् । अदृष्टपारम्—अदृष्टं दर्शनाविषयीभूतं पारम् अवधिः यस्य तत् ॥ ३१ ॥

आशामशेषमवनीतलमश्नुवानै-
रावेष्टितः परिकरैरमितप्रभावै[1] ।
आरूढबोधितलवेदिमभिन्नधैर्य-
मभ्याससाद मुनिपुङ्गवमात्मयोनिः ॥ ३२ ॥

व्या ॥ आशामिति । आशां दिशम् । अशेषं समस्तम् । अवनीतलं भूप्रदेशम् । अश्नुवानैः व्याप्नुवद्भिः । आवेष्टितः परिवृतः । परिकरैः परिच्छदैः । आरूढबोधितलवेदिम्—आरूढा बोधितलस्य

---

[1] भीष्, C.

अश्वत्थमूलस्य वेदिः परिष्कृता भूमिः येन तम् । अभिन्नधैर्यम्— अभिन्नमच्छिन्नं धैर्यं यस्य तम् । आत्मयोनिः मदनः ॥ ३२ ॥

आमुक्तचारुतरचीवरवारबाण-
मारूढयोगगजबन्धुरकन्धराग्रम् ।
आरब्ध योद्धुमविकम्पितशौर्यराशि
पुष्पायुधः स्फुरदमर्षकषायिताक्षः ॥ ३३ ॥

व्या ॥ आमुक्तेत्यादि । आमुक्तचारुतरचीवरवारबाणम्— आमुक्तं परिहितं चारुतरमतिमनोहरं चीवरं वल्कलमेव वारबाणं कञ्चुकः येन तम् । आरूढयोगगजबन्धुरकन्धराग्रम्— आरुढम् अधिरूढं योग एव गजस्य बन्धुरं मनोहरं कन्धराग्रं येन तम्; 'शिरोधिः कन्धरेत्यपि', 'बन्धुरौ नम्रसुन्दरौ' इति अमरवैजयन्त्यौ । अविकम्पितशौर्यराशिम्— अविकम्पितः अविचलितः शौर्यराशिः यस्य तम् । स्फुरदमर्षकषायिताक्षः— स्फुरता अमर्षेण कषायिते कलुषिते अक्षिणी यस्य सः ॥ ३३ ॥

तस्यान्तिके शमदमामृतवारिराशे-
र्मुक्ता बभूवुरमला विशिखाः स्मरस्य ।
शुद्धात्मनामकृतदानफलोन्नतीनां
किं किं न सिध्यति कृताक्षयपक्षकाणाम् ॥ ३४ ॥

व्या ॥ तस्येति । तस्य सिद्धार्थस्य । शमदमामृतवारिराशेः— शमश्च दमश्च शमदमौ अन्तर्बहिरिन्द्रियनिग्रहावेव अमृतं जरामरणवारणादमृतकल्पं तस्य वारिराशेः समुद्रस्य । मुक्ताः विसृष्टाः, कैवल्यभाजश्च । विशिखाः बाणाः । शुद्धात्मनाम् अमलस्वरूपाणाम्,

परिशुद्धहृदयानाम् । अकृतदानफलोन्नतीनाम्—अकृतं परैरकृतं दानं खण्डनं यस्यास्ताः, फलस्य शराग्रस्य उन्नतयः येषां तेषाम् । अकृताः असंपादिताः दानफलेन जाता उन्नतय अभ्युदयाः यैस्तेषाम्; 'दानं गजमदे त्यागे खण्डने,' 'फलं जातीफले लाभे बाणाग्रे' इति च त्रिकाण्डशेषः । कृताक्षयपक्षकाणाम्—कृताः धृताः अक्षयाः नाशरहिताः पक्षाः कङ्कादिपत्राणि यैस्तेषाम्, कृतः अक्षये अहिंसायां पक्षः स्नेहः येषां तेषाम् ॥ ३४ ॥

तस्मिन् क्षमामयतनुच्छदमादधाने
धैर्योदधौ[1] तपनचण्डतमप्रभावे ।
कुण्ठीकृतात्मगतयः कुसुमास्त्र[2]बाणाः
कृत्या इव प्रतिनिवृत्य तमेव जघ्नुः ॥ ३५ ॥

व्या॥ तस्मिन्निति । तस्मिन् सिद्धार्थे । क्षमामयतनुच्छदम्—क्षमैवक्षमामयः; स्वार्थेमयट्; यः तनुच्छदः तनुं छादयतीति तादृशं कवचम्। धैर्योदधौ धैर्यसमुद्रे । तपनचण्डतमप्रभावे—तपनः सूर्य इव चण्डतमः अत्युग्रः प्रभावः यस्य तस्मिन् । कुण्ठीकृतात्मगतयः—कुण्ठीकृता प्रतिरुद्धा आत्मगतिः येषां ते । कृत्याः आभिचारिकक्रियाः । तमेव प्रयोक्तारं मारमेव ॥ ३५ ॥

मारस्य मार्गणगणाः सुमनायमानाः
सत्पक्षसंभृतसमागतयोऽप्यवापुः ।
तं स्थूललक्ष्मुपगम्य न दानलाभं
को वा ददातु गुणहीनविचेष्टिताय ॥ ३६ ॥

---

[1] दधावधिकमप्रतिमप्रभावे. M. [2] कुसुमात्म. M.

व्या ॥ मारस्येति । मार्गणगणाः—बाणानां याचकानां च राशयः; 'मार्गणस्तु शरेऽर्थिनि' इति हेमचन्द्रः । सुमनायमानाः—सुमनसः पुष्पाणीव मनस्विन इव चाचरन्तः । सत्पक्षसंभृतसमागतयः—सद्भिः उत्कृष्टैः पक्षैः पत्रैः सहायैश्च संभृता पूर्णा समागतिः समागमः येषां ते । स्थूललक्षम्—स्थूलं लक्षं बृहत् शरव्यं, बहुप्रदम्; 'लक्षं लक्ष्यं शरव्यं च,' 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इति चामरः । दानलाभम्—खण्डनरूपं फलं, त्यागफलं च । गुणहीनविचेष्टिताय—गुणेन ज्यया, धर्मादिना च हीनं विचेष्टितं कृत्यं यस्य तस्मै; 'मौर्व्यां द्रव्याश्रिते सत्वशौर्यसन्ध्यादिके गुणः' इत्यमरः ॥ ३६ ॥

चक्रीकृतायतशरासनमा[1]स्थितेन
संप्रेषिताः शितशरा मकरध्वजेन ।
आसाद्य बुद्धमभजन् सुमनोमयत्वं
सत्सङ्गतिः सुरलतेव न किं करोति ॥ ३७ ॥

व्या ॥ चक्रीकृतेत्यादि । चक्रीकृतायतशरासनम्—चक्रीकृतं मण्डलीकृतम् यत् आयतं दीर्घं शरासनं धनुः । आस्थितेन प्राप्तवता । शितशराः तीक्ष्णबाणाः । सुमनोमयत्वम्—देवस्वरूपं, पुष्पत्वं च ॥३७॥

संप्राप्य शान्तहृदयं मुनिसार्वभौमं
संविद्धशेषपर[2]हितेष्वपि सायकेषु ।
सद्यो गतेषु मृदुतां स हि शम्बरारिः
व्यारोषदग्धहृदयो मृदुतां न भेजे ॥ ३८ ॥

[1] संस्थितेन. C.

[2] परोक्ष. C.

व्या ॥ संप्राप्येति । मुनिसार्वभौमं मुनिश्रेष्ठम् । संविद्विशेषरहितेषु ज्ञानविशेषशून्येषु । सायकेषु बाणेषु । शम्बरारिः मदनः । व्यारोषदग्धहृदयः—व्यारोषेण अधिककोपेन दग्धं हृदयं यस्य सः ॥ ३८ ॥

चेतोभवस्य सफला अपि सायकास्ते[1]
तं प्राप्य शान्तहृदयं विफला बभूवुः ।
दैवे समेयुषि पराङ्मुखतां हि सर्वं
हस्तोपयातमपि हन्त विनाशमेति ॥ ३९ ॥

व्या ॥ चेतोभवस्येति । सफलाः—सप्रयोजनाः शराग्रसहिताश्च । विफलाः—निष्प्रयोजनाः शराग्रहीनाश्च । दैवे विधौ । पराङ्मुखतां वैमुख्यम् । हस्तोपयातं हस्तगतम् ॥ ३९ ॥

इत्थं जगत्त्रयतिरस्करणक्षमेषु
सर्वेषु हन्त विशिखेषु निरर्थकेषु ।
वैरग्रहान्धहृदयो मथनाय तस्य
मारो महाप्रलयमारुतमादिदेश ॥ ४० ॥

व्या ॥ इत्थमिति । जगत्त्रयतिरस्करणक्षमेषु जगत्त्रयस्य त्रिजगतः तिरस्करणे तृणीकरणे क्षमेषु समर्थेषु । विशिखेषु बाणेषु । निरर्थकेषु निष्फलेषु । वैरग्रहान्धहृदयः—वैरस्य विरोधस्य ग्रहेण ग्रहणेन अन्धं मूढं हृदयं यस्य सः । मथनाय पीडायै । महाप्रलयमारुतं संवर्तवायुम् । आदिदेश आज्ञपयामास ॥ ४० ॥

आमूलभागधुतदिव्यनदीसमुद्य-
दम्भोभराहितयथाध्युषि[2]ताभिषेकः ।

[1] सक्त. M.    [2] °भ्युषि. C.

अभ्यर्चनार्थमिव संभृतपुष्परेणु-
रक्षोभितं मुनिमवाप महासमीरः ॥ ४१ ॥

व्या ॥ आमूलेत्यादि । आमूलभागधुतदिव्यनदीसमुद्यदम्भोभराहितयथाध्युषिताभिषेकः—आमूलभागं मूलभागपर्यन्तं धुतायाः कम्पितायाः दिव्यनद्याः देवगङ्गायाः समुद्यता उद्गच्छता अम्भसां भरेण आहितः कृतः यथाध्युषितः यथोक्तमनुष्ठितः अभिषेकः स्नानं येन सः । संभृतपुष्परेणुः—संभृताः संचिताः पुष्परेणवः पुष्पधूलयः येन सः । अक्षोभितम् अनभिभूतम्, परैरिति शेषः । मुनिं सिद्धार्थम् । महासमीरः संवर्तवायुः ॥ ४१ ॥

तं प्राप्य सर्वगुणभारगुरुं मुनीन्द्रं
न प्राभवच्चलयितुं स महाजवोऽपि ।
नैतद्विचित्रमखिलाटविघस्मरस्य
दावानलस्य न हि मूर्च्छति शक्तिरप्सु ॥ ४२ ॥

व्या ॥ तमिति । तं सिद्धार्थम् । सर्वगुणभारगुरुम्—सर्वेषां गुणानां भारेण गुरुं महान्तम्, अतिभारवन्तम् । चलयितुं कम्पयितुम् । सः प्रलयवायुः । महाजवः अतिवेगवान् । गुरुषु वेगवतां वेगोऽपि निरर्थक इत्याह—नैतद्विचित्रमिति । एतत्—वायौ सिद्धार्थचलनाशक्तत्वम् । अखिलाटविघस्मरस्य—अखिलायाः अटव्याः घस्मरस्य भक्षकस्य, दाहकस्येत्यर्थः । दावानलस्य वनवह्नेः । मूर्छति प्रसरति । अप्सु जले ॥ ४२ ॥

एवं महापवनवारिधरादिकेषु
व्यर्थीभवत्सु विपुलेष्वपि चायुधेषु ।

---

महृत. M. जयो. V. and M.

पुष्पायुधः पुनरियेष पुमांसमाद्यं
वाक्सायकैर्हृदयमर्मतुदैर्विजेतुम् ॥ ४३ ॥

व्या ॥ एवमिति । महापवनवारिधरादिकेषु—महापवनश्च वारिधरश्च तौ आदी येषां तेषु, संवर्तवायुमेघप्रभृतिषु । व्यर्थीभवत्सु निरर्थकेषु । विफलेषु अनुपयुक्तेषु । आयुधेषु प्रहरणेषु; 'आयुधं तु प्रहरणम्' इत्यमरः । वाक्सायकैः वाग्रूपबाणैः । हृदयमर्मतुदैः—हृदयस्य मर्माणि तुदन्ति विध्यन्ति इति तैः ॥ ४३ ॥

*नैव त्वदीयमिदमासनमस्मदीय-
मुत्थाय तूर्णममुतः सहसापयाहि ।
आपूरिता परमपारमिका मयैव
तत्साक्षिणी मम महापृतनेत्यवोचत् ॥ ४४ ॥

व्या ॥ नेति । तूर्णं शीघ्रम् । अमुतः अमुष्मात् आसनात् । अपयाहि दूरतो गच्छ । आपूरिता निर्वर्तिता । परमपारमिका परमोत्कृष्टता । तत्साक्षिणी परमपारम्यसाक्षाद्द्रष्ट्री । महापृतना महासेना ॥ ४४ ॥

अङ्कात्प्रसार्य कर[1]पल्लवमादिभिक्षु-
र्यावज्जगाद गिरमिद्धतपःप्रभावः ।
†मारः पलायत ततो महता बलेन
भ्रष्टातपत्ररथकेतुकुथेन भीतः ॥ ४५ ॥

---

[1] कर. C.

* Another reading of the second half of this stanza is given in the Madura MS.

आपूरिता तदनु पारमिता मयैव तत्साक्षिणी मम समस्तवसुन्धरेति ॥

† This passage is inserted between the two halves in M. and C. MSS.

तावन्महाप्रलयसागरमध्यवेगसंक्षोभमाप सकलापि च भूतधात्री ॥

व्या ॥ अङ्कादिति । प्रसार्य उद्यम्य । आदिभिक्षुः सिद्धार्थः । इद्धतपःप्रभावः—इद्धः प्रदीप्तः तपसः प्रभावः यस्य सः । पलायत अधावत् । ततः तावत् । बलेन सैन्येन । भ्रष्टातपत्ररथकेतुकुथेन—भ्रष्टः आतपत्रं श्वेतच्छत्रं च रथकेतुः रथध्वजश्च कुथः परिस्तोमश्च यस्मात् तेन; 'परिस्तोमः कुथो द्वयोः' इत्यमरः ॥ ४५ ॥

मराङ्गनास्तदनु मन्थरदृष्टिपाता
वाचालरत्नपदनूपुरपारिहार्याः ।
सद्यः समेत्य चतुरश्रविशालगर्भं
चक्रुस्तदग्रभुवि ताण्डवमत्युदारम् ॥ ४६ ॥

व्या ॥ मारेत्यादि । तदनु मदनपलायनानन्तरम् मन्थरदृष्टिपाताः—मन्थरः मन्दगामी दृष्टिपातः दृष्टिपतनं यासां ताः; 'मन्दगामी तु मन्थरः' इत्यमरः । वाचालरत्नपदनूपुरपारिहार्याः—वाचालौ मुखरौ रत्नानां पदयोः नूपुरः मञ्जीरश्च पारिहार्यः कटकश्च तौ यासां ताः; 'मञ्जीरो नूपुरोऽस्त्रियाम्,' 'आवापकः पारिहार्यः कटकः' इति चामरः । चतुरश्रविशालगर्भम्—चतुरश्रः अन्यूनानतिरिक्तः विशालः विपुलः गर्भः मध्यदेशः यस्मिन् तत् । तदग्रभुवि—तस्य सिद्धार्थस्य अग्रभुवि पुरोदेशे । अत्युदारम् अतिमहत् ॥ ४६ ॥

अन्तःसमाहितसमाधिरसानुषक्त-
मालोक्य शाक्यकुलनन्दनमप्रकम्प्यम् ।
कर्णामृतानि वचनानि च कातराक्ष्यः
कामाङ्गना विदधिरे करुणाक्षराणि ॥ ४७ ॥

---

[1] माणि• v.

व्या ॥ अन्तरित्यादि । अन्तःसमाहितसमाधिरसानुषक्तम्--अन्तः हृदये समाहिते उत्पादिते समाधिरसे ध्यानानन्दे अनुषक्तं लीनम् । शाक्यकुलनन्दनं सिद्धार्थम् । अप्रकम्प्यम् अक्षोभ्यम् । कर्णामृतानि श्रवणमधुराणि । कातराक्ष्यः--कातरे अधीरे अक्षिणी यासां ताः । करुणाक्षराणि--करुणानि करुणारसविशिष्टानि अक्षराणि येषु तानि ॥ ४७ ॥

अस्यै पतन्मदनसायकविह्वलायै
दृष्टिप्रदानमपि कर्तुमपारयन्तम् ।
उत्पाट्य लोचनयुगं द्विजपुङ्गवाय
त्वां दत्तवानिति कथं ब्रुवते पुराणाः ॥ ४८ ॥

व्या ॥ अस्या इति । पतन्मदनसायकविह्वलायै—पतद्भिः मदनस्य सायकैः बाणैः विह्वलायै विवशायै । दृष्टिप्रदानं दर्शनम्, नेत्रार्पणम् । अपारयन्तम् अशक्नुवानम् । उत्पाट्य उद्धृत्य । द्विजपुङ्गवाय ब्राह्मणश्रेष्ठाय । त्वां सिद्धार्थम्; ब्रुवत इत्यनेनास्य संबन्धः । पुराणाः प्राञ्चः ॥ ४८ ॥

मग्नां महामकरकेतनवारिराशौ
मामित्थमाधिविधुरामवलम्बशून्याम् ।
उद्धर्तुमप्यकुशलो जननाम्बुराशे-
रुत्तारयिष्यसि कथं त्वमशेषलोकम् ॥ ४९ ॥

व्या ॥ मग्नामिति । मग्नां निमग्नाम् । मकरकेतनवारिराशौ—मकरकेतनो मदन एव वारिराशिः सागरः तस्मिन् । आधिविधुराम्—आधिना मानसव्यथया विधुरां खिन्नाम् । अवलम्बशून्यां निराश्रयाम् ।

जननाम्बुराशेः संसारसागरात् । अशेषलोकं सर्वजनम्; 'लोकस्तु भुवने जने' इत्यमरः ॥ ४९ ॥

दृष्ट्वास्मदीयमनवद्यतमं विलासं
श्लाघाशिरोविधुतिमप्यतिदूरयन्तम् ।
उच्छिद्य मस्तकमुदस्तरिपुप्रभावं
त्वां दत्तवानिति वदन्ति कथं कवीन्द्राः ॥ ५० ॥

व्या ॥ दृष्ट्वेति । अनवद्यतमम्—अत्यन्तं निर्दुष्टम् । विलासं विभ्रमम् । श्लाघाशिरोविधुतिम्—श्लाघया शिरःकम्पम् । अतिदूरयन्तं त्यजन्तम् । उच्छिद्य उत्कृत्य । उदस्तरिपुप्रभावम्—उदस्तः निरस्तः रिपुप्रभावः शत्रुप्रतापः येन तम् ॥ ५० ॥

पुण्यात्मनामधिपते पुरुषोत्तमत्व-
माप्तुं पदं त्वमभिवाञ्छसि किं तपोभिः ।
अस्मासु कामपि वधूमधिरोपय त्वं
वक्षस्तटे महति मेरुशिलाविशाले ॥ ५१ ॥

व्या ॥ पुण्येत्यादि । पुण्यात्मनाम्—पुण्यवतां पुरुषाणाम् । अधिपते इति सिद्धार्थस्य संबोधनम् । पुरुषोत्तमत्वं पदम्—विष्णुत्वरूपं स्थानम् । अभिवाञ्छसि इच्छसि यदि । किं तपोभिः—तपोभिः किं प्रयोजनम्; तपोभिर्न साध्यमित्यर्थः । तर्हि तत्पदप्राप्तये किं कर्तव्यमिति चेत् तत्राह अस्मासु मारवधूषु । कामपि यां कांचित् । अधिरोपय आरोहय । वक्षस्तटे उरःप्रदेशे । मेरुशिलाविशाले—मेरोः शिलेव विशालः विस्तीर्णः तस्मिन् । यदि पुरुषोत्तमत्वमभीप्ससि तर्हि विष्णुर्लक्ष्मीमिव त्वमपि यां कांचित् वक्षस्तटे अधिरोपयेत्यर्थः ॥ ५१ ॥

भद्रान्ववायमथवा परमेश्वरत्व-
माकाङ्क्षसे समुपयानुमलं तपोभिः ।
कामप्यनूपु कमलायतदृष्टिपातां
वामालकां त्वमधिरोहय वामभागे ॥ ९२ ॥

व्या ॥ भद्रेत्यादि । भद्रान्ववायम्—भद्रः अन्ववायो वंशः यस्य तत् । परमेश्वरत्वं परमशिवस्वरूपम् । आकाङ्क्षसे प्रार्थयसे यदि । अलं तपोभिः तपसा साध्यं नास्ति । कमलायतदृष्टिपाताम्—कमलानामिवायतानां दृष्टीनां पातः यस्यास्ताम् । वामालकां चारुकुन्तलाम् । वामभागे सव्यभागे; 'वामः कामे सव्ये पयोधरे' इति हेमचन्द्रः । विनापि तपसा वामभागे कामाङ्गनारोपेण परमेश्वरसाम्यप्राप्तिः इति भावः ॥ ९२ ॥

आनन्दकन्दलितलोचनविभ्रमाणा-
मम्भोरुहप्रकरगर्वगलग्रहाणाम् ।
आविःस्मिताननरुचामवलोकनानां
पात्रीभवन्ति सुदृशां ननु भाग्यवन्तः ॥ ९३ ॥

व्या ॥ आनन्देत्यादि । आनन्दकन्दलितलोचनविभ्रमाणाम्—आनन्देन कन्दलिताः संजातकन्दलाः, प्रवृद्धा इत्यर्थः, लोचनानां विभ्रमा विलासाः येषु तेषाम् । अम्भोरुहप्रकरगर्वगलग्रहाणाम्—अम्भोरुहप्रकरस्य पद्मसमूहस्य यो गर्वः तस्य गलं गृह्णन्तीति तेषाम्; पद्मगर्वविनाशकानामित्यर्थः । आविःस्मिताननरुचाम् — आविर्भूता स्मितेन जाता आननरुक् मुखशोभा येषु तेषाम् । पात्रीभवन्ति विषयीभवन्ति ॥ ९३ ॥

आकृष्टरक्तपरपुष्टवचोविलासा-
दालोचनान्तविवृतादृतकर्णपेयात् ।
आश्चर्यभङ्गिसुभगादपरोक्षसौख्या-
दाभाषणान्मृगदृशाममृतं किमन्यत्[1] ॥ ५४ ॥

व्या ॥ आकृष्टेत्यादि । आकृष्टरक्तपरपुष्टवचोविलासात्—आकृष्टः रक्तस्य अनुरक्तस्य परपुष्टस्य वचसः कोकिलालापस्य विलासः येन तस्मात् । आलोचनान्तविवृतादृतकर्णपेयात्—आलोचनान्तं नेत्रान्तपर्यन्तं विवृताभ्यां विस्तृताभ्यामादृताभ्यां सादराभ्यां कर्णाभ्यां पातुं योग्यात् । आश्चर्यभङ्गिसुभगात्—आश्चर्यभङ्ग्या आश्चर्यसरीत्या सुभगात् मनोहरात् । अपरोक्षसौख्यात् प्रत्यक्षसौख्यरूपात् । आभाषणात् आलापात्; 'स्यादाभाषणमालापः' इत्यमरः । किमन्यत्, न किमपीतरदस्तीत्यर्थः ॥ ५४ ॥

अश्रान्तपानसहमौषधमात्मयोनि-
तापोदयेष्वनुपदंशमनोऽभिरामम् ।
अक्षीयमाणमधरामृतमङ्गनाना-
मास्वाद्यतामयि पुण्यवतां हि पुंसाम् ॥ ५५ ॥

व्या ॥ अश्रान्तेत्यादि । अश्रान्तपानसहम्—अश्रान्तं सततं पानं सहत इति तादृशम्; 'सततानारताश्रान्तसन्तताविरतानिशम्' इत्यमरः, सततपानेऽप्यरुच्यनुत्पादकमिति भावः । आत्मयोनितापोदयेषु— आत्मयोनेः मदनस्य तापोदयेषु तापाविर्भावेषु । अनुपदंशमनोऽभिरामम्—अनुपदंशेऽपि प्ररोचकद्रव्याभावेऽपि मनोऽभिरामं

[1] किमार्यम्. M., किमाद्यम्. V.

मनोहरम् । अक्षीयमाणं क्षयरहितम् । आस्वाद्यताम् आस्वादयितुं योग्यताम् । अयति प्राप्नोति ॥ ९५ ॥

. . . . . . . .
. . . . . . . . ।
. . . . . . . .
. . . . . . . . ॥ ९६ ॥

व्या ॥ . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . ॥ ९६ ॥

एवंविधैर्ललितभावरसानुविद्धै-
नृत्तक्रमैर्निरुपमैर्वचसां विलासैः ।
आलोक्य बुद्धमविकम्पितचित्तवृत्तिं
लज्जावशात्प्रतिनिवृत्य ययुस्तरुण्यः ॥ ९७ ॥

व्या ॥ एवमित्यादि । ललितभावरसानुविद्धैः—ललिताभ्यां भावरसाभ्यां अनुविद्धैः संबद्धैः । नृत्तक्रमैः नाट्यरीतिभिः । निरुपमैः—निर्गता उपमा येभ्यस्तैः, अतुल्यैरित्यर्थः । अविकम्पितचित्तवृत्तिम्—अविकम्पिता अचलिता चित्तवृत्तिः ध्यानरूपः मानसव्यापारः यस्य तम् ॥ ९७ ॥

इत्थं पुष्पशरासनस्य विजयव्यापारशुष्कास्थितां
संबोधिप्रमदां निवेश्य सुदृशं श्रीबोधिमूले वरः ।
सिद्धार्थश्चिरवासनापरिगतानुच्छिद्य दोषद्विषो-
मुक्तिक्षेत्रकुटुम्बरक्षणविधौ मूर्धाभिषिक्तोऽभवत् ॥ ९८ ॥

इति श्रीबुद्धघोषविरचिते पद्यचूडामणौ दशमः सर्गः ॥

ख्या ॥ इत्थमिति । इत्थं पूर्वोक्तप्रकारेण । विजयव्यापारशुष्क-स्थिताम् विजयव्यापारेण जयकर्मणा शुष्कं कृशं यथा तथा स्थिताम् । संबोधिप्रमदां समाधिरूपयोषितम् । सुदृशं सम्यग्दर्शनवतीम् । श्रीबोधिमूले अश्वत्थद्रुमूले । चिरवासनापरिगतान् अनादिवासना-प्रवृत्तान् । उच्छिद्य विनाश्य । दोषद्विषः रागादिशत्रून् । मुक्तिक्षेत्र-कुटुम्बरक्षणविधौ— मुक्तिक्षेत्रे स्थितानां कुटुम्बानां रक्षणविधौ रक्षा-कर्मणि । मूर्धाभिषिक्तः कृताभिषेकः, तत्पर इत्यर्थः । वृत्तं शार्दूल-विक्रीडितम्, "सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्" इति तल्लक्षणात् ॥ २८ ॥

॥ इति पद्यचूडामणिव्याख्यायां दीपिकाख्यायां दशमः सर्गः ॥

## INDEX TO THE STANZAS OF THE PADYACŪḌĀMAṆI.